वाच्यवाचक रूपंत द्विहेय ममेलक्षण ।
तत्पुनश्शुद्ध सामान्य मुपचारविधौ स्थितम् ॥ १३४ ॥
यद्भोगदानमंत्रैस्तु रहितं मात्रमैश्वरम् ।
मास्चतुर्धा विभक्तोय स्तमादायेध्मसंचयं ॥ १३५ ॥
आज्येनोभयत स्सिक्तं ब्रह्मक्षीर द्रुमोद्भवं ।
कुण्डस्य ब्रह्मभित्तिभ्यां मध्यभाग चतुष्टये ॥ १३६ ॥
निदध्यादुत्तराशांतं प्राग्भागा दादितःक्रमात् ।
ईशानाग्नेयपादाभ्यां पतितं प्राक्चतुष्टयम् ॥ १३७ ॥
आग्नेयनैर्ऋताराभ्यां विश्रान्तमपरं न्यसेत ।
नैर्ऋतानिल संस्पर्शि तृतीयं विनिवेश्यच ॥ १३८ ॥
वाय्वीशपद संरुद्धं चतुर्थन्तु चतुष्टयम् ।
एवं चतु विभक्तेन समिद्धेन समासतः ॥ १३९ ॥
कुण्डमेकं चतुर्धावै चतुर्णा सविभज्यच ।
अग्नीना मेकदेहानां चातुरात्म्य व्यपेक्षया ॥ १४० ॥
यदाय उपयोग्यस्स्यात् यस्मिन्यस्मिन्हि वस्तुनि ।
स्वमूर्तेः स्तर्पणार्थंच कर्मणि स्थापनादिके ॥ १४१ ॥
तदा तदा स आदेय स्स्वकात्स्थानाच्च यत्नतः ।
द्वितीय मिध्ममादाय त्वष्टकाष्टमयो हि य. ॥ १४२ ॥
द्विधाकृत्वा घृताज्येन पूर्ववत्सेचयेद्धतम् ।
निधाय दक्षिणस्यांच मध्य आग्नेय दिग्गत ॥ १४३ ॥
विश्रान्तं नैर्ऋतपदे चोत्तरस्यां तथापरम् ।
वारीशपदसंरुद्ध मान्यमादायवैततः ॥ १४४ ॥
चतुस्स्वरूपेन मन्त्रेण प्रणवालङ्कृतेनच ।
दक्षिणे स्रुक्चतुष्कंतु जुहुयादुत्तरे तथा ॥ १४५ ॥

सूर्य सोमात्मकं चाग्नेः विद्धितं लोचन द्वयम् ।
एतयो रन्तरं यद्वै तदग्ने वदनं स्मृतम् ॥ १४६ ॥
तत्रवै जुहुया त्पूर्वं समिधां सप्तकं क्रमात ।
घृतसिक्तां चतुस्संख्या मेकैकंहि सुपुष्कलाम् ॥ १४७ ॥
प्राक्कुंकुमादिना लिप्तां काष्ठ संख्यान्तु होमयेत् ।
सुग्धूरमधुपर्कंच वीजान्याज्यं यथाक्रमात् ॥ १४८ ॥
तत्राग्ने समिधोदाने विशेषोयं विधीयते ।
साधितंसंस्कृतेग्नौमा क्तान्निधायाग्नतश्चरुम् ॥ १४९ ॥
समुद्घाट्यावलोक्यादौ सम्प्रोक्ष्या र्घांम्भसाततः ।
दर्भकाण्ड चतुष्केण साग्निना तदनुस्पृशेत् ॥ १५० ॥
तन्मध्ये स्रुक्चतुष्कन्तु मन्त्रैराज्यस्य निक्षिपेत् ।
अथादाय स्रुचन्तत्र तद्वद्दद्या च्चतुष्टयम् ॥ १५१ ॥
चतुरंगुळ मानेना प्यन्नग्रास मथाहरेत् ।
तन्निधाय स्रुचाद्दर्भे तदूर्ध्वे पूर्ववद्धृतम् ॥ १५२ ॥
दद्यादग्नौ चतुष्कंतु क्षिपेदन्नाहुतिं ततः ।
भूयोग्नौ स्रुक्चतुष्कंतु चाज्यस्यापाययत्ततः ॥ १५३ ॥
ततोन्यमाज्यसंसिक्तं ग्रास मकृत्वाहुतिं पुनः ।
दद्यात्पूर्व प्रयोगेण त्वेवमेव चतुष्टयम् ॥ १५४ ॥
हुत्वाप्यन्नाहुतीनांच ह्याज्याभ्यां जुहुयात्ततः ।
तदन्ते तांय निर्मुक्तै- कुसुमै र्घांम्भिश्रितैः ॥ १५५ ॥
पूजयेच्चतुरो वारा न्मन्त्रैर्वा प्रणवै- प्रभुम् ।
ततो मोक्षाप्तये होमं यथाशक्ति समाचरेत् ॥ १५६ ॥
शतपूर्व सहस्रान्तं दद्या त्पूर्णाहुतिं ततः ।
एतत्मन्त्र चतुष्केण चतुर्भिश्चतुर्थवा ॥ १५७ ॥
प्राग्वत्पूर्णां पुनः कुर्या दर्भे स्सम्मार्ज्यच स्रुचम् ।
यथा भवति निस्स्नेह मथ मारय्यार्पितेनतु ॥ १५८ ॥

पुरतश्चाम्भसा पूर्यं तांचं पात्रेणं तेन वा ।
प्रागादौ कुण्डबाह्येतु प्रादक्षिण्येन सेचयेत् ॥ १५९ ॥
पवित्रकेणाथ ऊर्ध्वे विनिक्षिप्यकरेणवा ।
शेषं स्वशिरसो दद्या त्स्वस्थानेध त्वधोमुखे ॥ १६० ॥
निरुध्या द्धोम भाण्डेते भस्मना, तदनन्तरम् ।
जलानिर्मथितेनैव ह्यूर्ध्वपुण्ड्रं चतुष्टयम् ॥ १६१ ॥
हृदंसयोर्ललाटेच कुर्या द्दीप शिखाकृति ।
एवं परिसमाप्तेतु अग्निकार्ये पितृ सति ॥ १६२ ॥
संविभागः पितॄणांच यथा कार्यं स्तथोच्यते ।
कुण्डस्य योनि निकटे दक्षिणाग्रां स्तरेत्कुशान् ॥ १६३ ॥
भद्रपीठ समीपेतु क्ष्मातलेवा तदूर्ध्वतः ।
स्तरोपरि विकारार्थं तिलान् सरजतोदकान् ॥ १६४ ॥
क्रमेण भावये त्तत्र पितॄनथ पितामहान् ।
दृष्ट्वयेत्थ सर्वेषां देवाय विनिवेद्यच ॥ १६५ ॥
प्रोक्षितान्यन्नपात्राणि चत्वारि कबलानिच ।
स्तरोर्ध्वेतु निधायाथ सम्पूज्यार्घ्यादिना ततः ॥ १६६ ॥
क्रमेण चातुरात्मीये मन्त्रै रप्ययोगतः ।
ततस्तु नाम्ना गोत्रेण मन्त्रपूर्वं तिलोदकम् ॥ १६७ ॥
सर्वेषा मर्घ्यकलशा त्प्रदद्याच्च यथाक्रमम् ।
तादर्थ्येनाथ चतुरो विनिवेश्या सनेषुच ॥ १६८ ॥
लब्धलक्षा न्परे तत्वे ब्राह्मणा न्पाञ्चरात्रिकान् ।
प्राङ्मुखं द्वितयं चैव द्वितयं चाप्युदङ्मुखम् ॥ १६९ ॥
सम्पत्यभावे प्येकंवा विनिवेश्योत्तराननम् ।
अथ तेषां क्रमा त्कुर्या दर्चनं चातुरात्म्यवत् ॥ १७० ॥

अर्घ्यानुलेपनाद्यैस्तु भोगै मन्त्रावसानिकैः ।
तत्तत्कालोचितै स्सर्वै रनुपादेयवर्जितैः ॥ १७१ ॥
ते श्चापि मौननिष्ठैस्तु भवितव्यं सुयन्त्रितैः ।
वाग्यता शुद्धलक्षाश्चा प्यन्ने मूर्तौ जनार्दने ॥ १७२ ॥
येश्नन्ति पितर स्तेन तृप्ति मायान्ति शाश्वतीम् ।
अत स्सव्यभिचारन्तु मौनं वर्ज्यं क्रियापरैः ॥ १७३ ॥
शुभ मव्यभिचारं य त्सत्कार्यं सर्ववस्तुषु ।
यदंगसंकेतमय मव्यक्तै र्लाखिकाक्षरैः ॥ १७४ ॥
कृतमोष्ठपुटै र्बद्धै र्मौनं तत्सिद्धिहानिकृत् ।
स्वयमेव सुबुद्ध्याय त्सर्ववस्तुषु वर्तते ॥ १७५ ॥
शब्दै रनुपदिष्टैस्तु तन्मौनं सर्वसिद्धिदम् ।
तस्मा द्वै श्राद्धभोक्तॄणां दिव्येवा पितृकर्मणि ॥ १७६ ॥
दद्या न्नैवेद्यवाक्यं मर्यादाभ्यन्तरे ऽग्रत. ।
येनाचमनपर्यन्तं कालं तिष्ठन्ति वाग्यताः ॥ १७७ ॥
विधिना नेन वै नित्यं यागयज्ञेतु वैष्णवे ।
संविभागः पितॄणांच कार्य स्सद्रविणै र्नरैः ॥ १७८ ॥
कृत्वातिलोदकान्तंवा फलमूलै स्स्वशक्तितः ।
तदर्थं ग्रासमात्रन्तु दद्या द्वोप्यथ भैक्षुके ॥ १७९ ॥
यस्मा द्दिव्ये महामन्त्रे दत्तं यत्पूजितेऽच्युते ।
पित्रर्थं मल्पंवा भूरि तत्तेषा मक्षय भवेत् ॥ १८० ॥
पश्चा च्छरीरयात्रार्थं मभ्यर्च्य परमेश्वरम् ।
लब्धानुज्ञस्तुविकुर्या द्ब्राह्मणाग यथाविधि ॥ १८१ ॥
भोज्यं नैवेद्यपूर्वन्तु सर्वमादाय पात्रगम् ।
विनिवेद्यच देवाय पवित्रीकृत्यचाम्भसा ॥ १८२ ॥
सत्यदपाद्यलदयाचा प्यन्नदोष क्षयंकरी ।
चेतसा चातुरात्मीया भावनीयाच भावना ॥ १८३ ॥

रसात्माध्यक्षसंज्ञो वै साधुभावे व्यवस्थितः ।
प्रद्युम्नो भगवा न्रूपे चैतद्वीर्येतु लांगलिन् ॥ १८४ ॥
भोक्ता महात्मा भगवान् वासुदेव स्स्वयं द्विजः ।
चतुःप्रणवसम्भक्तं ततोम्भ श्चुळकं पिबेत् ॥ १८५ ॥
चक्रकुण्डेथ तेनैवा प्यन्नाहुतिचतुष्टयम् ।
हुत्वाचाभिमते ग्रासै स्ततोऽश्नीया थथारुचि ॥ १८६ ॥
समाचम्य पुनर्यांया त्प्रयतो भगवद्गृहम् ।
मनोबुद्ध्यभिमानेन स्त्वन्यस्य धरातले ॥ १८७ ॥
कूर्मव च्चतुरः पादान् शिरस्तत्रैव पञ्चमम् ।
प्रदक्षिणक्रमेतेन त्विवंरूपेण सर्वदा ॥ १८८ ॥
अष्टांगेन नमस्कृत्य ह्युपविश्याग्रतः प्रभोः ।
आगमाध्ययनं कुर्या त्तद्वाक्यार्थविचारणम् ॥ १८९ ॥
प्राप्तेतु संध्यासमये स्नात्वावा जघनावधि ।
क्षाळयित्वा ततःकुर्या द्वासस्संपरिवर्तनम् ॥ १९० ॥
अर्चयित्वार्घ्यं पुष्पाद्यै देवमग्निं यजेत्ततः ।
यथाशक्ति जपं कुर्या दासाद्य शयनं ततः ॥ १९१ ॥
समाधाय बहिर्देवं निरालम्बपदेस्थितम् ।
अप्रयत्नेनवैतावं दनिरुद्धेन तेजसा ॥ १९२ ॥
सह तेनैव वै निद्रा यावदभ्येति साम्प्रतम् ।
समुत्थायार्धरात्रेथ जितनिद्रो जितश्रमः ॥ १९३ ॥
कमण्डलुंस्थितेनैव समाचम्यतु वारिणा ।
गुरुं देवं नमस्कृत्य ह्युपविश्याजिना सने ॥ १९४ ॥
न्यासं मन्त्रचतुष्केण कुर्यात्संहार लक्षणम् ।
आपादाज्जानुपर्यन्त मनिरुद्धंच विन्यसेत् ॥ १९५ ॥
प्रद्युम्नाख्यं न्यसेन्मन्त्रं नाभ्यन्तं जानुमण्डलात् ।
नाभेराकर्णदेशंतु मन्त्रं सांकर्षणं न्यसेत् ॥ १९६ ॥

आकर्णात् ब्रह्मरन्ध्रान्तं चतुर्थं विनिवेद्य च ।
ततस्त्वभिमतेनैव त्वास्ते पद्मासनादिना ॥ १९७ ॥
स्वात्मना चातुरात्मीय मभिमानं समाश्रयेत् ।
समं कायशिरोग्रीवं सन्धाय सह वक्षसा ॥ १९८ ॥
दृङ् नासाग्रगताकार्या विनिमीलित लक्षणा ।
जिह्वा तालुतलस्थाच स्वान्तरे दशनावळी ॥ १९९ ॥
ईषदोष्ठपुटौ लग्नौ धार्ये द्वे बाहुकूर्परे ।
ऊरुमध्यप्रदेशेतु हस्तौ नाभावधोन्यसेत ॥ २०० ॥
अधरोत्तर योगेन वामदक्षिणतः क्रमात् ।
अचलं योगपट्टेन त्वेवं सन्धार्य विग्रहम् ॥ २०१ ॥
संकोच्यापानदेशनव प्युपरिष्टात्तमेवहि ।
विकास्यावर्णहीनेन हार्णेना (?) लक्ष्यमूर्तिनः ॥ २०२ ॥
विषयान्तर्निविष्टन्तु क्रमाच्चित्तं समाहरेत् ।
कुर्यांद्बुद्धिलीनन्तु तच्च कुर्या त्स्वगोचरे ॥ २०३ ॥
समाधायात्मनात्मानं सहमन्त्रै स्ततः क्रमात् ।
आजाग्रत्पदभूमैवं यथावद्वदतः शृणु ॥ २०४ ॥
मध्याह्न भास्कराकारै स्सर्वै स्संशान्तविग्रहैः ।
स्मरेत्पूर्वोदितं पद्मं चातुरात्म्यैरधिष्ठितम् ॥ २०५ ॥
ततो जाग्रत्पदस्थंचा प्यनिरुद्धंच मन्त्रराट् ।
परावर्त्य शतं बुद्ध्या तदभिन्नेन चात्मना ॥ २०६ ॥
तन्मन्त्रजपसामर्थ्या त्तादात्म्य स्थितिबन्धनात् ।
महिमातु सविज्ञान स्तदीय स्तस्य जायते ॥ २०७ ॥
अभ्यासा द्वत्सरान्तेतु तदद्वैतसमन्वितम् ।
अथ प्रद्युम्नमन्त्रन्तु परावृत्य शतद्वयम् ॥ २०८ ॥

एव स्थितस्य यथा मनोरथ मन्तरायानुपहतस्य फलसिद्धि माह ।

## एकान्तात्यन्त दास्यैक रति स्तत्पद माप्नुयात् ।

उक्तच परमैकातिना परिचरणप्रकार मनुक्रम्य तस्य निविघ्न श्री पौष्करे ' प्रवृत्तिकालादारभ्य आत्मलाभावसानिक । यत्रावकाशो विघ्नाना निय ते न कदाचन" इति । एतदेवाभिप्रेयोक्त श्रीभारते " सकलादेवभगवान् तत्वतो भावितात्मना । नतान्त मखिल काल सेवय त्यमृतेनतु ॥ ज्ञानेन बन्ध मयेन भवितव्य सदैवहि । प्राप्तये सर्वकामाना ससारभय भीरुणा " इति । अत "श्रूयतेखलु गोविन्दे भक्तिमुद्वहता नृणा । ससारन्यूनताभीता स्त्रिदशा परिपन्थिन " " सय शतेन विघ्नाना सहस्रेण तथातप । विघ्ना युतेन गोविन्दे नृणाभक्ति निवार्यत" इत्यादिक परभक्त्यवस्थात प्राचीना वस्थाविषय नेतव्य । अत्र भूमविद्यायामिव ऐश्वर्याद्यवरोचीनपुरुषार्थ प्रतिपादन परमपुरुष प्राप्तिरूप प्रधानतम पुरुषार्थपारम्यसमर्थनार्थतया । उक्तच श्री भारते 'प्रत्यवार्थंच मोक्षस्य सिद्धय स्सप्रकीर्तिता" इति ॥

अतो मोक्षसाधनत्वमेवास्य शास्त्रस्ये त्यभिप्रायेणाह ।

## तत्प्रधान मिदं शास्त्रं

अत्र यथाह न्यासोपासनरूप प्रापकनिष्ठाप्राप्तृतया निर्दिष्ट पर मैकान्तीना तत्प्राप्यता तच्छन्दन परामृश्यते ॥

अथात्र सौगतार्हतादि समन्धाना शङ्करादिग्रन्थाना भगवदभिप्राय विरुद्धतात्यापनाय उक्तसग्रहप्रकारेण शिष्याणा यथावस्थित समन्तगीतार्थ प्रणनाय गीताशास्त्र निगमयति ।

## इति गीतार्थसंग्रहः ॥ ३२ ॥

इत्थमेव सर्वनिष्टसंप्रदायपरंपरागत स्समीचीनो गीतार्थः । नपुनः कुदृष्टिभिरुन्नीतः । सचैव स्वयोग महिमचुळकित परमपुरुषविभूतियुगळ भगवन्नाथमुनि नियोगानुवर्ति श्रीमद्राममिश्रसकाशा द्बहुशास्त्रविद्भि रस्माभि र्बहुश श्श्रुतस्य भगवद्गीतार्थ प्रपंचस्य संग्रहइति मुमुक्षुभि स्संग्राह्यतम इति भावः ॥ ३२ ॥

सारं फल्गुन सारथीयवचसां श्रीयामुनेयोद्धृतम्
त्रिस्पष्टै रिति वेंकटेश्वरकवि र्व्याचष्ट भाष्याक्षरैः ।
यद्वादेषु कुदृष्टिवाद्यकुहनाकोलाहलास्कन्दिभि
र्जंबाले र्जयघोषणावणवणै र्विद्राणनिद्रादिशः ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिषु श्रीगीतार्थसंग्रहरक्षा ।

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेंकटेशाय वेदान्तगुरवे नमः ॥

श्रीमते निगमान्तमहादेशिकाय नमः ।



# GITARTHA SANGRHA.

By

SRI YAMUNA CHARYA

*With*

*GITARTHA SANGRAHA RAKSHA*

*A Comentary*

OF

SRI MATH VADANTA DESIKA

EDITED BY

P. B. ANANTHA CHARIAR

Sanskrit Pandit

Printed At The

SRI SUDARSANA PRESS.

CONJEEVERAM.

1901.

Price. As-6

शास्त्रमुक्तावळी – १०

# गीतार्थ संग्रहः

श्रीभगवत् यामुन मुनिवर विरचितः ।



श्री कवितार्किक सिंहेन सर्वतन्त्र स्वतन्त्रेण

श्रीमद् वेदान्ताचार्येण विरचितया

## गीतार्थ संग्रह रक्षाख्यया व्याख्यया सह ।



श्रीकाञ्ची

प्रतिवादिभयङ्करं अनन्ताचार्येण



श्री सुदर्शन मुद्राक्षर शालायां

मुद्रित ।



॥ श्रीकांची ॥



इदानीमेतन्मूल्यम्– ० – ६ – ०



श्री ॥

# गीतार्थसंग्रहरक्षा भूमिका।

## गीतार्थसंग्रहः।

इयंकिल कृतिः भगवद्यामुनमुनीशितुः श्रीभाष्यकार प्राचार्यस्य। अयहि गुरूत्तमो ऽवततार कलौ ४०१८ ( A D 906. ) धातृ वत्सरे कर्कटमासीयोत्तराषाढायां वीरनारायणपुरे चिदम्बरक्षेत्रसमीपस्थे। पिता महोऽस्य भगवान् नाथमुनिमिश्रः योगमहिमप्रत्यक्षतत्वत्रयः न्यायतत्वयोगरहस्ययो र्निबद्धा योगवलाध्यक्षिताच्च शठकोपमुने न्र्यासनिघासम्प्रदायं द्रमिडाम्नायसहितं अन्यांश्च सर्वान् सांप्रदायिका नर्थविशेषान् लेभे। सोयम् श्रीशठमर्षणमहर्षे र्वंश्यो भगवन्नाथमुनिमिश्रप्रशिष्यैः श्रीराममिश्रगुरुभिः कृपया परया गुरुकुलकैंकर्यकारप्रवणे स्वस्य बहुशोऽलर्क पत्रोपहारार्पणे नोपगच्छद्भि श्चिरादप्यनुपजात आभिमुख्ये कदाचि त्तदर्पण परिहरद्भि स्थच कुतो नाद्यालर्कपत्रपाक इत्यनुयुक्तेन पाचकेन महात्मा कोपि प्रतिदिन मर्पय न्नाद्यापिपेदिति सूचिते स्वोपसेवनवद्धतृष्णेन परेद्यवि सगौरव प्रतिपाल्यता गुरुणानेन प्रयुक्तै 'दर्शनादेव साधव' इति वचनबला त्कटाक्षमात्रदूरीकृत राजभागप्रयुक्तान्यपर्यादिदोषकथ क्रमा दुपदिष्टशास्त्रार्थसार स्सन्यास्थत्व।

बाल्येच महाभाष्यभट्टारका दधीयानो विद्या मपुनरुच्चारणेना न्यामेव नवीना मक्षरमातृका निर्माय बालका नद्ध्यापयत्व। चोळराजसदसि विद्वज्जनकोलाहलनामान पण्डितवर्य मजयत्व। अस्य जयापजययो पणबन्धमारचितवतो राजदपत्यो श्रीरंगाचया राजमहिष्या ( आळवन्दार् ) 'रक्षणायागत' इत्यनिनादित स्तत्पणबन्धानुसारेण राज्ञार्पित राज्यार्धं न्याय्येन पथा पर्यपाल्यत्व।

तस्यास्य गुरूत्तमस्य कृतय - आगमप्रामाण्य, महापुरुषनिर्णय, आत्मसिद्धि, संवित्सिद्धि, ईश्वरसिद्धि, श्रीगीतार्थसंग्रह, श्रीस्तुतिश्चतुश्श्लोकी, स्तोत्ररत्न, इत्यष्टौ।

अन्यतमोऽयमेषु श्रीगीतार्थसंग्रहो भगवद्भाष्यकारविरचित गीताभाष्यानुसारेण व्याख्यायि श्रीमता कवितार्किकसिंहेन श्रीरङ्गराजदिव्याज्ञालब्धवेदान्ताचार्यपदेन तत्सहधर्मचारिणी करुणाकटाक्षलम्भित सर्वतन्त्रस्वतन्त्रबिरुदेन श्रीवेङ्कटनाथदिव्यघण्टांशेन श्रीवेङ्कटनाथदेशिकेन ।

सोऽयं गुरुरवततार काम्यां कलौ ( ४३७० ) तमे A( 1268 ) विभववत्सरे कन्याश्रोणायां विश्वामित्रकुलतिलकस्यानन्तार्यगुरोस्सोमयाजिनो जायायां तोताद्र्यवासमाद्ययायाम् ।

अयञ्च मातुलेन वादिहंसाम्बुवाहार्येण ध्यापितसकलशास्त्र विंशत्यब्दे विश्रुतनानाविधनिबन्ध त्रिंशद्वार श्रावितशारीरकभाष्य श्रुतप्रकाशिकाशताभिषेककारी तात्पर्यचन्द्रिकया विशदीकृतगीताभाष्यसारार्थं परिच्छिन्नमतिभिरन्यथोपवर्णयद्भिः रर्थजात मुपजाता वैयाकुली मपाकर्तुं सङ्क्षेपात गीताभाष्यपद्धतिभिरेव स्वय मेन व्याचख्यौ श्रीगीतार्थसंग्रहम् । सेयं व्याख्यान्वर्थनाम्नी श्रीगीतार्थसंग्रहरक्षा । अस्य कृतयः परश्शताः । तासुचाद्य यावदस्माभि र्मुद्रिता मुद्र्यमाणाश्च, मीमांसापादुका शतदूषणा - सेश्वर मीमांसा च ।

व्याख्यानरत्नेन चानेन सह सर्वसम्मान्यस्य गीतार्थसंग्रहस्य मुद्रणं सर्वदेशप्रसृमरया सर्वादिभूतया नागरलिप्या वश्यकर्तव्य मङ्गानद्भिरस्माभि रिय मद्य शास्त्रमुक्तावल्यां मुद्र्यतेति भावयन्तु सहृदयाः ।

इति

श्री सुदर्शन पादपद्मसेवी

शास्त्रमुक्तावलीसम्पादकानुचरः ।

कार्यं मप्ययुक्त्या वै चातुरात्म्यस्य पूजनम् ।
एकादश्यां नभुंजीत विहित स्तत्र जागरः ॥ ७६ ॥
द्वादश्या मादिदेवन्तु समाराध्य यथाविधि ।
मध्याह्नसमये प्राप्ते विधिव त्तन्मयो न्यसेत् ॥७७॥
भक्त्या शक्त्यातु चतुर एकैकं प्रत्यहं स्वपि ।
गवां ग्रास स्त्वसामर्थ्यां ल्लोपनीयो नसर्वदा ॥७८॥
सह पूर्वोक्तदानैस्तु व्रतकर्मपरायणैः ।
प्राप्तेतु तद्दिने भूयः कृष्णपक्षस्य लांगलिन् ॥ ७९ ॥
अर्चनं केशवादीनां त्रिसन्ध्यं प्राग्व दाचरेत् ।
द्वादश्यां सोपवासस्तु न्यस्ये द्दामोदरं प्रभुम् ॥ ८० ॥
दानान्त मर्चनाद्यन्तु सितपक्षोक्त माचरेत् ।
माधवेन क्रमेणैव चैवं मूर्त्यन्तरं यजेत् ॥ ८१ ॥
मूर्तिभि श्चाप्यवाप्येन संवत्सर मतन्द्रितः ।
यो यो धिकारी भक्तो या तस्य तुष्य त्यधोक्षजः ॥ ८२ ॥
षोडशाख्य मतो वक्ष्ये व्रतं धन्यतमं हि यत ।
पूर्वेव द्वात्रिंशमय आषाढस्याद्य वासरे ॥ ८३ ॥
गृहीत्वा नियमं कुर्या दाप्रभातादिपूजनम् ।
त्रिसन्ध्यं वामनादीनां विधिवत् द्वादशाह्कम् ॥ ८४ ॥
त्रयोदश्यां ततोभ्यर्च्य चतुर्वर्गप्रदं प्रभुम् ।
आद्यन्त मनिरुद्धादि तदाद्य मपरेऽहनि ॥ ८५ ॥
तृतीयं पंचदश्यान्तु संशान्तिव्यक्तिलक्षणम् ।
एवं मूर्त्यन्तरे युक्तं चातुरात्म्यं त्रिधा स्थितम् ॥ ८६ ॥
आराध्य परया भक्त्या चैकादश्या मनश्ततः ।
पूर्णं तदर्चनं कृत्वा पंचदश्यां यथाविधि ॥ ८७ ॥
चत्वार स्तन्मयाः पूज्याः श्रद्धापूतेन चेतसा ।
आत्मयागं ततः कुर्या द्दिनान्ते चैत्रपूर्वकम् ॥ ८८ ॥

एव माश्वयुजे भूयः पर्वादौ प्रारभे त्क्रियाम् ।
पद्मनाभादिमूर्तीना मर्चनं विहितं क्रमात् ॥ ८९ ॥
एकादश्या मनश्नंस्तु सर्वं निर्वर्त्य पूर्ववत् ।
सम्प्राप्तेच ततः पौषे यजे न्नारायणादिकम् ॥ ९० ॥
द्वादश्यां तद्द्विषट्कंच तथा व्यूहत्रयं त्वपि ।
चैत्रे तद्विवसा दादौ विष्ण्वादीनां समर्चनम् ॥ ९१ ॥
विहितं सहूत ज्ञानां सह व्यूहत्रयेणतु ।
विशेषपूजनं कुर्या त्सम्पत्रे वत्सरे सति ॥ ९२ ॥
विभौ रम्ये द्विजेन्द्राणां षोडशानां स्वशक्तितः ।
दत्तशिष्ट मन्नमंच दैर्घापात्रेन भावितम् ॥ ९३ ॥
हविश्शेषेण संयुक्तं व्रतिनां भोजनं हितम् ।
एव सितेऽसिते वापि ह्युभयो रपि पक्षयोः ॥ ९४ ॥
यथाभिमतमासा द्वै समारभ्य यजे त्क्रमात् ।
एकादशेष्व नाखिलान् पर्वादौतु सकृत्सकृत् ॥ ९५ ॥
द्वादश्यां सोपवासस्तु तन्मासेशमथार्चयेत् ।
तत्कारणादि भेदोत्थ चातुरात्म्येन वै सह ॥ ९६ ॥
पुण्य व्रतमिदं विद्धि वृद्धस्त्री बालसिद्धिकृत् ।
नित्यं सङ्कर्षणैः कार्यं मविरुद्ध मखेददम् ॥ ९७ ॥
प्राक्प्रणीते महाभोगे शक्त्या दान समन्वितैः ।
गृहस्थै ब्रह्मचर्यस्थै र्वानप्रस्थैस्तु भिक्षुकैः ॥ ९८ ॥
येन येन प्रकारेण वित्तं सम्भृत्य वैपुनः ।
नित्यं धर्मा विरुद्धेन भैक्षपूर्वेण सर्वदा ॥ ९९ ॥
कुटुम्बभरणाद्यर्थं लाभे भैक्षादिकेतु ये ।
भवन्ना परमा यत्र बुद्धिमां स्तत्र संयदेत् ॥ १०० ॥
दाता ददाति यत्किंचि त्पूजा पूर्वांहि भक्तितः ।
पृच्छ तदीयमशुभं तिष्ठत्यर्थिजनाश्रितम् ॥ १०१ ॥

परिभूतेतु वै लाभे सन्तोषो यस्य जायते ।
प्रतिग्रहोत्थितो दोष स्तस्य दूरतरं व्रजेत् ॥ १०२ ॥
एवं ज्ञात्वाप्यपात्राणां भक्तानां भावितात्मनां।
जनयेद् दुर्बुद्धिभेदन्तु नेतरेषां कदाचन ॥ १०३ ॥
यत्र दाता गृहीताच द्वावेव कल्मषात्मकौ ।
दृष्टादृष्ट विनाशार्थं दानं द्वाभ्यां द्वतं तु तत ॥ १०४ ॥
प्रागेवं वित्तसंशुद्धिं भावशुद्धि समन्विताम् ।
निश्चयीकृत्य यत्नेन दिव्य मायतनं व्रजेत् ॥ १०५ ॥
कृतसंसिद्धये तूनं सिद्धायतनमेवया ।
अथवायतनं रम्य मासन्न नगरादिकम् ॥ १०६ ॥
निर्विघ्नेन व्रतं यस्मा त्रिष्पद्येतात्र कर्मिणाम् ।
कर्मवाङ्मनसै श्शुद्ध स्तपो निष्क्रियापरः ॥ १०७ ॥
यो नान्य देवतायाजी तत्वतो भगवन्मयः ।
कस्मिंश्चिद्वैभवे रूपे व्यूहीये वा सुबुद्धिमान् ॥ १०८ ॥
यद्वलक्ष्यो भवे द्भक्त्या स्वासागमनिदर्शनात ।
तस्यापि तादृशानांच भविना मनुकम्पया ॥ १०९ ॥
व्यक्तता भगमद्देव स्स्वयमेव धरात्मना ।
यत्र मोक्षमदं विद्धि दिव्यमायतनं हि तत् ॥ ११० ॥
मन्त्रसिद्धैश्च विबुधै र्मुनिमुख्यै स्तथामलैः ।
शान्तःप देशजानान्व प्यात्मनश्चापि कीर्तये ॥ १११ ॥
मन्त्राकृति मदं ध्यात्वा पाषाणं वसुधातले ।
पावनं वा वनं वृक्षं ज्ञात्वाया देवताश्रयं ॥ ११२ ॥
कृत्वा तच्छक्ति संरुद्धं विसृज्यच तदाश्रितन् ।
विद्धि सर्वेश्वरस्यैवं स्थितं निलय लक्षणम् ॥ ११३ ॥
स्वमन्त्र सन्निधिं तत्र कृत्वा तद्विग्रहान्वितं ।
पूजितं यत्र पुण्यार्थे स्तत्सिद्धा यतन स्मृतम् ॥ ११४ ॥

फळमायेतु विमार्थै स्स्वकुलो द्धारणायच ।
स्थापितं भगवद्भिर्वं ज्ञेय मायतनं हितत् ॥ ११५ ॥
क्रियांगभागं यातस्य सर्वगस्यचवैविभोः ।
विद्धि सर्वेश्वरस्यैवं स्थितं नियत लक्षणम् ॥ ११६ ॥
स्वमन्त्र सन्निधिं तत्र कृत्वा ताद्विग्रहान्वितं ।
प्रासादद्वार देशाच्च यत्रशंखध्वनिक्षयः ॥ ११७ ॥
पूर्वादिसर्वदिक्काव त्क्षेत्रं भवति वैष्णवम् ।
सिद्धावतारितादेया त्सदेताद्द्विगुणं स्मृतम् ॥ ११८ ॥
त्रिगुणं च स्वयंव्यक्ता देहान्ते भावितात्मनाम् ।
फलं साळोक्यता पूर्वं परिज्ञेयं क्रमाद्यतः ॥ ११९ ॥
दुष्टेन्द्रिय वशा च्चित्तं नृणां यत्कल्मषै र्वृतं ।
तद्न्तकाळे संशुद्धिं यातिनारायणालये ॥ १२० ॥
व्रता न्येतानियःकुर्या दभिसन्धाय चेतसा ।
अभीष्ट मतितीव्रेण तदाप्नो त्यचिरात्ततः ॥ १२१ ॥
श्रद्धधानै रत्त स्तस्मात दृष्टादृष्टफलाप्तये ।
व्रता न्येतानि कर्तव्या न्यभिसन्धाय चेतसा ॥ १२२ ॥
नायत्नादस्तु कर्तव्यो व्रतभंगा त्कदाचन ।
संकल्पादेव भगवा स्तत्वतो भावितात्मनाम् ॥ १२३ ॥
व्रतान्त मखिलं कालं संचय त्यनृतेनतु ।
एवमेवं चद्रत्क्ष्येण भवितव्यं सदैवहि ॥ १२४ ॥
प्राप्तये सर्वकामानां संसार भयभीरुणा ॥ १२५ ॥

इति श्री पाञ्चरात्रे श्रीसात्वत संहितायां व्रतविधिर्नाम

सप्तमः परिच्छेदः ॥ ७ ॥

श्रीः ।

श्रीमते रामानुजाय नमः ।

# अथ अष्टमः परिच्छेदः ।

भगवान् -

व्रतमेतदमन्त्रं च सामान्यं सार्वलौकिकम् ।
सितेतर विभागेन प्रोक्तं मन्त्र द्वयं शृणु ॥ १ ॥
मागर्य मार्थयित्वातु दृष्टा दृष्ट मदस्सहि ।
ज्ञात्वा स्थिरमतिः कुर्या त्तदर्थे चक्रमण्डलम् ॥ २ ॥
तन्मध्ये चतुरात्मातु यष्टव्यः कर्णिकोपरि ।
चतुर्दिक्ष्वी क्षमाणस्तु वासुदेवादितः क्रमात् ॥ ३ ॥
हृदादिनेत्रपर्यन्त मंगषट्कं यजेत्ततः ।
अर्घ्यादिभिः क्रमा द्भोगै र्व्रतज्ञेन पुरोहितैः ॥ ४ ॥
ततः कुण्डान्तरेचैव संस्कृतेग्नौच विन्यसेत् ।
चक्रं मन्त्रगणोपेतं समिद्भिस्तर्पये त्क्रमात् ॥ ५ ॥
पश्चात्तण्डुलसम्मिश्रै स्सघृतैर्बहुभि स्तिलैः ।
अर्घ्योदकेन शिरसा पवित्रीकृत्य साम्प्रतम् ॥ ६ ॥
नतजानुशिराश्शिष्यं कृत्वासौ श्रावयेत्प्रभुम् ।
त्वय्याराधनकामोयं व्रतं चरितु मिच्छति ॥ ७ ॥
संकल्पसिद्ध्यै भगव न्पूरयास्य मनोरथान् ।
इति विज्ञाप्य देवेशं ततः पुष्पाणि दापयेत् ॥ ८ ॥
अष्टांगमथवैकुर्या त्प्रमाणं समदक्षिणम् ।
भूयोभूयो ऽनवच्छिन्नं भक्तिश्रद्धापुरस्सरम् ॥ ९ ॥
तत स्तस्योपदेष्टव्यं विधानं मन्त्रपूर्वकम् ।
सान्तं षष्ठस्वरारूढं अनुस्वारविभूषितम् ॥ १० ॥

बीजमाद्यस्यच विभो वासुदेवस्य कीर्तितं ।
सदेव जीवबीजस्थं षष्ठस्वरविवर्जितम् ॥ ११ ॥
द्वितीयस्वरसंयुक्तं संकर्षणस्य बीजराट् ।
उभयोरन्तरे रेफ माद्यबीजस्य योजयेत् ॥ १२ ॥
बीजं प्रद्युम्ननाथस्य तृतीयं सर्वकामदम् ।
जीवारूढं हकारन्तुं लान्तस्योपरि विन्यसेत् ॥ १३ ॥
विसर्गसहितं बीजं मनिरुद्धस्य वाचकम् ।
द्विभुजा स्सर्वएवेते सूर्येन्दुशत सन्निभाः ॥ १४ ॥
तेजसा त्वत्रभेदोस्ति स्वरूपेण सितादिना ।
दक्षिणोत्तरपाणिभ्यां तर्जनी मध्यमान्तरे ॥ १५ ॥
आद्यस्य चक्रशंखौ द्वौ ध्येयावंसद्वयोपरि ।
स्कन्धसूत्रसमस्थेन दक्षिणेनतु पाणिना ॥ १६ ॥
गृहीता मुष्टियन्धेन विश्रान्ता पीठपृष्ठतः ।
ध्येया गदा द्वितीयस्य तथाभूते करे परे ॥ १७ ॥
संस्मरे द्धेतिराड्दीमं लीलाक्षेप इवोद्यतम् ।
एवं प्रद्युम्ननाथस्य व्यत्ययेनतु ते उभे ॥ १८ ॥
दक्षिणोत्तर हस्ताभ्यां श्रोत्रमण्डल सम्मुखौ ।
शंखपद्मौ चतुर्थस्य तथाकृष्टौतु संस्मरेत् ॥ १९ ॥
किन्तुवैपंकजं नाळ मस्यवैपाणिपृष्ठगम् ।
हकारंच सकारस्थं कृत्वा पीठानियेश्यच ॥ २० ॥
द्वितीय तुर्यषष्ठाष्ट द्विषट्कदशकैः क्रमात् ।
स्वरैर्नियोजये द्विद्वि दशाद्या नेत्रपश्चिमान् ॥ २१ ॥
चातुरात्मीय मन्त्राणां साधनत्वेन सर्वदा ।
त्रिधा हकारं कृत्वादौ जीवबीजे तथैवच ॥ २२ ॥
ककारञ्च क्षकारंच लिखेत्तद्वत्त्रिधा त्रिधा ।
द्विषट्कमेव बीजानां क्रमादादौ नियेश्यच ॥ २३ ॥
ततो यायुधरायारि संज्ञं यद्याक्षरत्रयम् ।
पौनः पुन्येन सर्वेषा मधोभागे नियोजयेत् ॥ २४ ॥

सर्वे षष्ठस्वरारूढ़ा अनुस्वारविभूषिताः ।
बोद्धव्याः केशवादीनां बीजास्त्वेते पृथक्पृथक् ॥ २५ ॥
क्षहसत्रितयं चैव चतुर्धाविलिखे त्क्रमात् ।
ततोद्विषट्कं बीजानां तस्याधो विनिवेश्यच ॥ २६ ॥
क्रमेण सप्तमाद्वर्गात द्वितीयंच चतुर्थकम् ।
पुनस्तृतीयंतुर्यंच द्वितीयं च तृतीयकम् ॥ २७ ॥
द्वितीयं च चतुर्थंच चतुर्थं तदनन्तरम् ।
तृतीय मष्टमंचाथ तृतीयं सप्तमात्पुनः ॥ २८ ॥
नवम द्वादशाभ्यांतु विशेषमिम(?) मामच ।
अधोनियोजयेद्रेफं तत्त्रयाणांतु मूर्धनि ॥ २९ ॥
षट्सप्तमाष्टसंज्ञाना मिकारमुपरिन्यसेत ।
सानुस्वांरच्च सर्वेषा मितिदेवीगणस्यच ॥ ३० ॥
बीजद्वादशकं प्रोक्तं यथाचानुक्रमेणत ।
श्रीश्च वागीश्वरीकान्तिः क्रियाशक्ति विभूतयः ॥ ३१ ॥
इच्छाप्रीती रतिश्चैव मायाधी महिमेतिच ।
समुद्रमूर्तये स्वाहा पद्मस्य प्रणवादिकः ॥ ३२ ॥
सर्वान्तश्चारिणेकृत्वा ततोगगन मूर्तये ।
स्वाहान्तः प्रणवान्तश्च मन्त्रश्चांशस्य कीर्तितः ॥ ३३ ॥
ओंकारो वेदमात्रेथ विद्ये स्वाहा पदंतुवै ।
गदामन्त्र स्स्वयंप्रोक्त श्चक्रस्याथ निगद्यते ॥ ३४ ॥
ओंकारान्ते पदं दद्यात्पंचार्ण प्रभविष्णवे ।
श्लिष्टौ विकासितौ हस्तौ योज्यौ चामणि बन्धनात ॥ ३५ ॥
तद्बाहुकौ सरौ (?) द्वौच नाभौ संरोप्य दण्डवत् ।
ईषद्वे छोलये त्पश्चा दध ऊर्ध्वंच यौ करौ ॥ ३६ ॥
गुप्तिः कृत्वातु योज्यैषा मुद्राराधनकर्मणि ।
आसाद्य प्रास्थिवा मर्चां स्वयं वा समपृष्ठताम् ॥ ३७ ॥

सर्वलक्षणसम्पन्नां यस्यां चेतः प्रसीदति ।
हेमादिनिर्मितं कुर्या त्पीठं वा लक्षणान्वितम् ॥ ३८ ॥
समं त्रिभागन्यूनं वा द्वादशांगुळविस्तृतम् ।
चतुरश्रं चतुष्पादं विस्त [?] रार्धेन चोन्नतम् ॥ ३९ ॥
तृतीयं भाग मादाय विस्तराञ्च [ विस्तरर्च ] स्वरं स्वकम्
तेन तन्मध्यगं कुर्या त्कमलं लक्षणान्वितम् ॥ ४० ॥
द्विषट्कारन्तु तद्बाह्ये चक्रं सर्वांगचिह्नितम् ।
सिद्धामरनरादीनां हृदयस्थाक्षराच्युति (?) ॥ ४१ ॥
मृदुमुच्चरणाकान्ति निर्मुक्ताकृतिलक्षणा ।
पादाम्बुरुहमुद्राथ कार्यासे कर्णिकोदरे ॥ ४२ ॥
सम्पाद्य चैव माधारं पीठं वार्चान्वितं स्मरेत् ।
पादाब्जमुद्रारहितं कुण्डं तदनु कल्पयेत् ॥ ४३ ॥
फुल्लपद्मसमाकार मोष्ठयोनिसमन्वितम् ।
चलमेकदिशिस्थंवा ततो नियम माचरेत् ॥ ४४ ॥
संवत्सरस्य पूजार्थं विभो वै द्वादशात्मनः ।
मार्गशीर्षा त्समारभ्य मासादौ कौमुदान्तिमम् ॥ ४५ ॥
मासेशमन्त्रसंजप्तं युक्तं होमकुशाम्बुना ।
दशम्यां पंचगव्यञ्च पिबे त्सम्पूज्य केशवम् ॥ ४६ ॥
तन्निवेदित मन्नंच प्राग्भुक्त्वातु घृताधिकम् ।
नातीव तृप्तिजनकं दन्तकाष्ठ मथाचरेत् ॥ ४७ ॥
शयनं मंत्रतोयेन प्रोक्षये त्सकुशं ततः ।
शयनस्थो जपे न्मन्त्रं शत मष्टाधिकन्तु वै ॥ ४८ ॥
एकादश्यां प्रभातेथ मध्याह्नेथा दिनक्षये ।
केशवाय नमस्कुर्या द्बहुशः प्रणवादिकम् ॥ ४९ ॥
तस्य वै पूजनं भक्त्या कुर्या त्कालत्रयंतु वै ।
सर्वगं परमं ज्योति रमूर्तं ममहृदि यत् ॥ ५० ॥

सएव वासुदेवेति मत्वा सम्यग्यजे त्ततः ।
चेतसा मृतसंकाशैः पुष्पाद्यै रखिलैः प्रभुम् ॥ ५१ ॥
पश्चात्त ममलं धाम ध्याये न्मुक्त मनश्वरम् ।
श्रोणीतटार्पितकरं सानुकम्प मनूपमम् ॥ ५२ ॥
दक्षिणेनतु हस्तेन भक्ताना मभयप्रदम् ।
पुष्पाभरणवस्त्राढ्यं शंखचक्रद्वयान्वितम् ॥ ५३ ॥
तत स्तस्मात्तु वै धाम्नो युगप त्रिस्सृतं स्मरेत् ।
महत्स्फुलिंगसंकाशं महस्तु सततोदितम् ॥ ५४ ॥
तेन चाक्रमरावृन्दं समाक्रान्तंच भावयेत् ।
अथ प्रत्येकतेजोंशा दुद्भूतं भावये त्क्रमात् ॥ ५५ ॥
त्रयं त्रयं सितायेच केशवाद्यं चतुर्भुजम् ।
दक्षिणोत्तरपाणिभ्यां पृष्ठतः केशवादिषु ॥ ५६ ॥
युग्मं युग्मं परिज्ञेयं क्रमेणोर्ध्वगतंच तम् ।
शंखचक्र कजंविद्या त्साथ शंखो थहेतिराट् ॥ ५७ ॥
विद्या चक्रंच तद्विद्या त्पद्म श्शंखश्च सोन्वुजम् ।
पद्मध्वनिगदाशंख स्त्वविद्याम्बुरुह स्सरी ॥ ५८ ॥
भूयो धामगणा त्तस्मा त्संस्मरे त्रिस्सृतं महः ।
केशवादिविभागेन श्रियाद्यंच त्रयं त्रयम् ॥ ५९ ॥
कमलादित्रयेणैव त्वन्योन्यत्वेन लांछितम् ।
बद्धपद्मासनस्थंच दिवि दिक्षुच सम्मुखम् ॥ ६० ॥
संवीजयेत्तु विनया श्चामरेण सितेनच ।
देवीद्वादशकंचैव तासां रूप मथोच्यते ॥ ६१ ॥
पूर्णचन्द्रानना स्सर्वा स्सर्वर्तुकुसुमान्विताः ।
सर्वलक्षणसम्पन्ना स्सर्वाभरणभूषिताः ॥ ६२ ॥
विद्रुमाभं त्रयं त्वाद्य मपरं चम्पकप्रभम् ।
प्रियंगुमंजरीश्यामं तृतीयं देवतात्रयम् ॥ ६३ ॥

चतुर्थं त्रितयं ध्याये ज्जातीपुष्पसमप्रभम् ।
आद्यायाः कमलं पाणा वन्यस्याहेतिराट्करे ॥ ६४ ॥
शंखं ध्याये तृतीयस्या एवं ध्याये त्रिषु त्रिषु ।
चतुस्त्रिदेवतान्ताना मेव माद्यं त्रयं क्रमात् ॥ ६५ ॥
स्नात्वा सम्पूजनं कुर्या ज्जागरेण समन्वितम् ।
स्तोत्रै स्तथाऽनकै र्वाद्यै र्गीतकैः क्षपये न्निशाम् ॥ ६६ ॥
रात्रिक्षये ततः स्नात्वा त्सिताम्बरधर श्शुचिः ।
मासेशमन्त्रसन्नद्धं कृत्वा देवं स्मरे त्तथा ॥ ६७ ॥
पूजापनयनं कृत्वा स्नानकर्म समाचरेत् ।
मध्यतः केशव[केवल]स्यादौ [केशव]केवलस्य महात्मनः ॥६८॥
वासुदेव [ स्य ] स्व रूपस्य चक्रस्थस्य त्वनन्तरम् ।
प्रागेरभिनिविष्टस्य सकलस्या व्ययस्यच ॥ ६९ ॥
तदादिद्वादशानांच दद्या त्स्नानादिकं क्रमात् ।
अम्बुना पंचगव्येन क्षीरेण तदनन्तरम् ॥ ७० ॥
दध्ना घृतेन मधुना सर्वौषधिजलेनच ।
बीजाम्बुफलतोयेन गन्धपुष्पाम्बुना ततः ॥ ७१ ॥
हेम रत्नोदकेनाथ कुम्भस्थेन पृथक्पृथक् ।
सित विलेपनं पुष्पं धूपम्मधुघृतं दधि ॥ ७२ ॥
नैवेद्यं विविधं पूतं ग्रीह्ययोपवसंयुतम् ।
निवेद्य राजते पात्रे यथाशक्तिविनिर्मिते ॥ ७३ ॥
पात्राभावात्त रजतं स्वल्पमात्रं न लोपयेत् ।
पश्चात्तद्ग्रयत्पूतं मधुपर्कादिकन्तु वै ॥ ७४ ॥
प्रतिपाद्य गुरो भक्त्या प्रसन्नेनान्तरात्मना ।
यवान्नं व्रीहिजं त्वादौ समश्नीया द्घृतान्वितम् ॥ ७५ ॥
ततः प्रभृति कालाच्च प्रत्यहं केशवस्यतु ।
स्थानद्वये निविष्टस्य पूजनंच समाचरेत् ॥ ७६ ॥

प्राग्वन्मध्ये केशवस्य देवीयुक्तस्य बाह्यतः ।
ततो नारायणादीनां सदेवीनांच वैक्रमात ॥ ७७ ॥
सर्वेषां पूजनं कुर्या त्प्रादक्षिण्येन यत्नतः ।
यथा सम्भवतो भक्त्या पुष्पधूपादिकेनतु ॥ ७८ ॥
यावदभ्येति दशमी सिता पौषस्य वैतिथिः ।
ततः प्रभृतिकालाच्च प्रागुक्तविधिनाखिलम् ॥ ७९ ॥
नारायणाख्यमन्त्रेण व्रतकर्मसमापयेत ।
त मर्चये त्तु प्रथमं मध्ये कारुण्यमूर्तिगम् ॥ ८० ॥
बहिर्देवीसमेतंच प्राग्वत्स्नानादिना प्रभुम् ।
द्वादश्यां तं विधानेन केशवेन समन्वितम् ॥ ८१ ॥
किं तत्र विहितं पश्चा त्पूजनं केशवस्यच ।
दिनावसाने द्वादश्यां धूपं दत्वा क्षमापयेत् ॥ ८२ ॥
कान्तासमन्वितं देवं केशवं क्लेशनाशनम् ।
अथ दामोदरान्ताभि र्मूर्तिभिश्च समन्वितम् ॥ ८३ ॥
देवं नारायणं भक्त्या परेह्नि समर्चयेत् ।
मध्ये केशवव त्पश्चा च्चक्रस्थं केशवारके ॥ ८४ ॥
केशवंच तदीये रे यजे त्कान्तासमन्वितम् ।
एवं प्रतिदिनं ताव द्यावन्मासस्य सा तिथिः ॥ ८५ ॥
ततो माधव मूर्तेवै प्राग्वदाराधनं भवेत् ।
तदर्चने समाप्तेत् द्वादश्यां फाल्गुनस्यच ॥ ८६ ॥
संकर्षणं परत्वेन भावये द्वासुदेववत ।
तदाश्रितन्तु गोविन्दं मध्ये मूर्त समाह्वयेत् ॥ ८७ ॥
चक्रस्थ सह देव्यावै ततस्ते पूज्यपूर्ववत ।
रक्तचन्दन युक्तेन कुंकुमेन तथैव च ॥ ८८ ॥
पुष्पस्त्र ग्वाससा तद्व द्रक्तशाल्योदनेन च ।
सुगन्धेन फलै रक्तै र्लिंगै र्वा रक्तधातुभि. ॥ ८९ ॥

आरक्तरक्तसंसिद्धैः विद्रुमैः पुरुभूषितैः ।
सक्तूंस्तु ताम्रपात्रेतु कृत्वाथ विनिवेदयतु ॥ ९० ॥
तदर्चनेच होमान्ते सम्पन्ने सति वै प्रति ।
याते वासत्रये चैव प्रसन्ने न्तःस्थिते च्युते ॥ ९१ ॥
गुरुमूर्तिगतो देवः पूजनीयश्च भक्तितः ।
वस्त्रै विलेपनै र्माल्यैः कटकै रंगुळीयकैः ॥ ९२ ॥
यथाशक्ति विना शाठ्यं पारणे पारणे ततः ।
प्रीणये द्वासुदेवस्य मूर्तित्रयसमन्वितम् ॥ ९३ ॥
ऐहि [कं] कान् धर्मकामा [र्थ] र्था न्मम यच्छन्तु शक्तयः ।
मोक्षविघ्नोपशमनं नित्यं कुर्वन्तु मूर्तयः ॥ ९४ ॥
सर्वदा नित्यशुद्धो यः परमात्मा परः प्रभुः ।
पतितस्य भवाम्बोधौ वासुदेवो स्तु मे गतिः ॥ ९५ ॥
कृत्वैवं प्रीणनं सम्य ग्वासुदेवस्य भक्तितः ।
तन्मूर्तित्रितयस्यापि शक्तित्रययुतस्य च ॥ ९६ ॥
अथ त्रितययुक्तस्य तृतीयस्य महात्मनः ।
सङ्कर्षणाभिधानस्य तत आरभ्य यत्नतः ॥ ९७ ॥
प्राग्व दाराधनं कुर्या त्प्रत्यहं मासभेदतः ।
पश्चा न्मासत्रये याते मासे ज्येष्ठस्य तद्दिने ॥ ९८ ॥
त्रिविक्रमाख्यमन्त्रेण चान्य त्सर्वं पुरोदितम् ।
मध्यतो म्बुजगर्भस्थं प्रद्युम्नं सर्वगं स्मरेत ॥ ९९ ॥
त्रिविक्रमं तदाकारं भावयित्वा ततो यजेत् ।
अनन्तरंच संस्नाना दात्मीय प्रागनन्तरम् ॥ १०० ॥
यष्टव्यस्य विशेषेण त्वनुज्झिततनुः [ पुमान् ] क्रमात् ।
श्रीखण्डंच सकर्पूरं सोपकुंकुमभावितम् ॥ १०१ ॥
पीतं विलेपनं चात्र तथा पुष्पफलादिकम् ।
पीतानां फलपुष्पाना मभा [वात्] वे मनूर्णेनतु ॥ १०२ ॥

पूतेन धातुचूर्णेन रंजये त्कुंकुमेन वा ।
सघृतं हेमपात्रंच पूजान्ते विनिवेद्यच ॥ १०३ ॥
पात्राभावात् [ वे ] यथाशक्ति कांचनंच घृतोपरि ।
घत स्सम्पूजनं कुर्यात व्रतादेष्टारि पूर्ववत ॥ १०४ ॥
गोहेमवस्त्रपूर्वैस्तु यथा सन्तोप मेति सः ।
तत्पूजान्ते पारणेन द्वितीयंच जगत्पतिम् ॥ १०५ ॥
प्रीणये त्संकर्षणं च गृहीत्वा पाणिना जलम् ।
प्रणवाद्येन तेनैव मन्त्रेणा चोदितेनच ॥ १०६ ॥
सनमस्केन किन्त्वत्र गति स्संकर्षणोस्तु मे ।
अथ त्रिविक्रमं देवं वामनं श्रीधरं प्रभुम् ॥ १०७ ॥
यजे न्मासत्रयं ताव द्याव त्स्या द्दशमी सिता ।
तदादि वै हृषीकेश मन्त्रेणा खिल माचरेत् ॥ १०८ ॥
परस्य मनिरुद्धस्य प्रातिचावसरे स्मरेत ।
सदाकारं हृषीकेशं पद्मोदर गतं स्मरेत् ॥ १०९ ॥
इष्टासम्य ग्विधानेन चक्रास्थं यथा पुरा ।
अत्रराजोप चारै [ र्लाभै ]स्तु पट्पदा[ हे ]भैस्तुचार्चनं ॥११०॥
पुष्पौदनाम्बरैः कुर्या दभावाद [ वेचा ] अनाशिना ।
पिंजरी कृत्य यत्नेन देवाय विनिवेद्यच ॥ १११ ॥
कृष्णागरु विमिश्रंच लेपनं चात्र कुंकुमं ।
धौतायसमयं पात्रं मणिभि श्चासितै श्चितम् ॥ ११२ ॥
वस्त्रैश्च चित्रितैः कृष्णैः पूजान्ते विनिवेद्यच ।
सम्य क्तदर्चनं कृत्वा यथा सम्पत्ति भक्तितः॥ ११३ ॥
तृतीयं प्रीणये त्साव त्प्रद्युम्नो मेस्तु वैगतिः।
ततो मासानुमासंच हृषीकेशा दनन्तरम् ॥ ११४ ॥
पद्मनाभं समभ्यर्च्य ततो दामोदरन्तुवै ।
गते मासत्रये ह्येवं सम्प्राप्य पुनरेवहि ॥ ११५ ॥

दशमीं मार्गशीर्षस्य तदा कर्माणि कर्माणि ।
चतुर्णं चातुरात्मीयं मन्त्राणां विनियोज्यच ॥ ११६ ॥
चतुर्मूर्त्यभिधानंच समालभ्यं यजेञ्च तद् ।
कर्णिकोपरि पत्रेषु प्रागादि हृदयादिकम् ॥ ११७ ॥
विदिक्ष्वस्त्रं विभोरग्रे नेत्रं वै केसराणिच [श्रितं] ।
अरान्तरे तत स्त्वेस्वे दशद्वौ केशवादिकान् ॥ ११८ ॥
चतुर्वर्णैस्तु कुसुमै स्तथा वस्त्रानुलेपनैः ।
तद्वद्रस्यैश्च नैवेद्यैः पानकैः पावनैः फलैः ॥ ११९ ॥
अथान्यै विविधै र्भोगैः ध्वजाद्यैश्चापि वाहनैः ।
मात्राभि स्सहिरण्याभि स्ताम्बूलेनात्मना ततः ॥ १२० ॥
तर्पये द्वह्निमध्यस्थं मन्त्रग्रामं यथोदितम् ।
ततोर्चनं गुरोः कुर्या द्विशेषेण पुरोदितम् ॥ १२१ ॥
ब्राह्मणान्भोजये स्पश्वा त्तेभ्यो दद्याञ्च दक्षिणाम् ।
प्रीणनंच पठे त्माग्व दनिरुद्धोस्तु मे गतिः ॥ १२२ ॥
ततः पूर्णाहुतिं दत्वा त्वंश्चादिद मुदाहरेत् ।
व्रतोत्तमेना नेनाद्य मया भक्त्याकृतेनच ॥ १२३ ॥
चत्वारो वासुदेवाद्या मूर्तय श्शक्तिभि स्सह ।
प्रयान्तु प्रीति मतुलां दिशन्तु भविनो ऽभयम् ॥ १२४ ॥
धन्यं व्रत मिदं पुण्यं संसाराब्ध निवर्तनम् ।
अल्पक्लेशमसम्पूर्ण मनन्तफलदं नृणाम् ॥ १२५ ॥
मा पक्षाद् स्त्वतः कार्यं एतदाचरणे तु वै ।
यथो पसवृनैः कार्यं मधमै मध्यमै र्जनैः ॥ १२६ ॥
अशाक्येन यथाशक्ति त्वारण्यैः कुसुमादिकैः ।
अद्भि दूर्वांकुरैः पत्रै र्जप जागरणादिना ॥ १२७ ॥
दीपेना भ्युक्षणेनैव मार्जनेनो पलेपनैः ।
व्रीहीन् सक्तू नयाग्र्यंच तिला न्यन्नान्यथा हरेत् ॥ १२८ ॥

संवत्सरस्य पूजार्थं दानार्थं प्राशनायच ।
पूर्वं मासत्रयं दध्ना व्रीहीं न्वै विनिवेद्यच ॥ १२९ ॥
द्वादश्यां भोजना त्पूर्वं हितं तत्प्राशनं सदा ।
अपरं सक्तवश्चैव तृतीयं त्रितयं घृतम् ॥ १३० ॥
तिलानां त्रितयं चान्य त्प्राशनं चैव मेव हि ।
स्या दथैकादशीपूर्णा द्वादश्याथ तया सह ॥ १३१ ॥
परे हनि तदा कुर्यात द्वादश्या मर्चनादिकम् ।
संवत्सरस्य वैमध्याद्य स्त्वेकां कर्तुं मिच्छति ॥ १३२ ॥
तस्या मपि स्वमन्त्रेण कर्मपूजान्त माचरेत् ।
यथा प्रागिस्तु पुष्पाद्यैः प्रागुक्तांगै स्सहार्चनम् ॥ १३३ ॥
पररूपस्य मध्येतु पूजनं स्वे [ नके ] न्वगेव हि ।
केवलस्य तु तस्यैव स्वनाम्ना प्रीणनं हितम् ॥ १३४ ॥
पारणं प्रा ग्विधानेन त्वेकं भूरिफलप्रदम् ।
तस्मा द्वे त्रीणि वा कुर्या त्स्वशक्त्या श्रद्धया न्वितः ॥ १३५ ॥
नारी ह्यनन्यशरणा यथैवंहि समाचरेत ।
निस्स्वामिका वानुज्ञाता पत्या साधान्नुयाच्च तत ॥ १३६ ॥
अथापवर्गदं वक्ष्ये चातुर्मास्यं व्रतोत्तमम् ।
यत्कृत्वा भिमता न्कामा न्निहैव लभते नरः ॥ १३७ ॥
गृह मालाद्य निर्बाधं देशे वा जननाकुले ।
यथाविभवविस्तीर्णं तुर्याश्रं वा यथायतम् ॥ १३८ ॥
धूमनिर्गमनोपेतं गवाक्षगणभूषितम् ।
इष्टकाद्यै श्चितं कुर्या त्तन्मध्ये पिण्डि [ ता ] कात्रयम् ॥ १३९ ॥
चतुरश्रंच विच्छिन्नं भूमेः किंचि त्समुन्नतम् ।
ततो दक्षिणदिग्वेदे रूर्ध्वे कुण्डन्तु पूर्ववत् ॥ १४० ॥
मध्ये चन्दनमिश्रेण रोचना कुंकुमेन च ।
गोक्षीरमर्दितेनैव मासि मासि लिखे च्छुभम् ॥ १४१ ॥

चक्रे षट्पत्रगर्भन्तु स्नानपीठं सुदग्दिशि ।
तत स्त्वाषाढमासस्य दशम्या मुदितेन्दुना ॥ १४२ ॥
वासुदेवाख्यमन्त्रेण तोय मादाय पाणिना ।
भगवन्पुण्डरीकाक्ष सर्वभूतपते ऽच्युत ॥ १४३ ॥
व्रतं मे त्वत्प्रसादेन निष्पद्य तु तवाप्तये ।
ततो चंये द्वासुदेवं द्वादश्यां कमलोदरे ॥ १४४ ॥
प्रागादावथ पत्राणां त्रयं संकर्षणादिकम् ।
प्रादक्षिण्येन विन्यस्य यावद्रक्षः पदच्छदम् ॥ १४५ ॥
ईशानपद् पत्राद्या प्यनिरुद्धादिकत्रयम् ।
अप्ययेन तु सम्पूज्य याव त्पश्चिम दिग्दलम् ॥ १४६ ॥
भूतावासं पुनर्मध्ये तत श्चक्रारकेषु च ।
क्रमेण पूर्वा दारभ्य न्यास्वं पूजनमाचरेत् ॥ १४७ ॥
वामनं चाथ तद्देवी भूमन्तंच तत शिरः ।
श्रीधरं स्त्वथ तत्कान्ता शिखाकवचमेवच ॥ १४८ ॥
हृषीकेशश्च तत्पत्नी ह्यस्त्रं तद्वत् लोचनम् ।
ध्यानं स्नानं तथा पूजां होमं जपसमन्वितम् ॥ १४९ ॥
क्रमेणानेन सर्वेषां सर्वदैव समाचरेत् ।
द्वादश्यां श्रवणस्याथ मध्ये संकर्षणं यजेत् ॥ १५० ॥
तत्पत्राभ्यां वासुदेवं चक्रारेष्वथपूर्ववत् ।
तृतीयं पद्मनाभाख्यं तथा देवी हृदादिवत् ॥ १५१ ॥
ततो नभस्य द्वादश्यां प्रद्युम्नः कर्णिकागतः ।
आद्यस्तत्पत्रगो ऽराणां त्रय नारायणादिकं ॥ १५२ ॥
देव्यश्चैवांगषट्कंतु पूर्ववच्चारकान्तरे ।
ततस्तदग्र द्वादश्या मनिरुद्धं यथापुरं ॥ १५३ ॥
पत्रयुग्मे सर्दायेतु चादिदेवं यजेत्क्रमात् ।
त्रिविक्रमान्तं विष्ण्वाद्य शक्तिरंगान्यथादिवत् ॥ १५४ ॥

तथा लिङ्गे मन्त्रवरैः कर्म निःशेष माचरेत् ।
द्वादश्यां पूर्ववन्मध्ये षडङ्गन्तुल्यरूपधृक् ॥ १५५ ॥
मूर्तयोऽनन्तरस्याश्च नेमिस्था देवतागणाः ।
पूजाहोमौ विशेषेण पूर्णान्तं पूर्वचोदितम् ॥१५६॥
इत्येतत्सविशेषंच व्रतमुक्तं समासतः ।
यत्कृत्वा पुनरप्यत्र जायते न पुनर्भवे ॥१५७॥

इति श्रीपाञ्चरात्रे श्री सात्वतसंहितायाम्
संवत्सरविधि र्नाम
अष्टमः परिच्छेदः ॥८॥

---

## अथ नवमः परिच्छेदः ।

---

श्रीनारदः ।

अथलाङ्गलिनादेव श्चक्रभृत्स्वपरिचोदितः ।
यत्तच्छृणुत विप्रेन्द्राः कथ्यमानं मयाधुना ॥ १ ॥

संकर्षणः ।

सूक्ष्मव्यूह विभागेन सबाह्याभ्यन्तरंहियत् ।
परस्य ब्रह्मण स्तस्य ज्ञातमाराधनंमया ॥ २ ॥
इदानीं श्रोतुमिच्छामि विभोस्सद्विभवात्मनः ।
आराधनं यथावच्च भक्तिनामीप्सितप्रदं ॥ ३ ॥

भगवान् ।

वैभवीयो महाबुद्धे देवतानिचयोमहान् ।
यउक्तस्ते मयापूर्वं मेकैकं विद्धि तत्त्रिधा ॥ ४ ॥

चतुर्णां युगसन्धीनां युगानाञ्च तथैवहि ।
विश्वविप्लव दोषाणां विनाशाय चमुद्यतं ॥ ५ ॥
सितरक्तादिरूपेण ज्वलदस्त्र करांकितं ।
कार्यारम्भे तथामध्ये ह्यवसानेतु सर्वदा ॥ ६ ॥
सन्धत्ते रूपमात्मीय मेकएव ह्यनेकधा ।
श्रेयसेसर्वलोकानां स्थूलवाकामरूपधृत् ॥ ७ ॥
अनुग्रहेणवपुषा कुन्देन्दुधवलेनच ।
वीरासनादिनाचैव स्थितम्मुदितमानसं ॥ ८ ॥
क्रीडाविधूतसर्वाङ्गं सौम्यवक्त्रमनाकुलं ।
विघ्नादोषगणंसर्वं ध्वंसयन्तंच मोक्षिणां ॥ ९ ॥
तद्वचक्तं शान्तसंज्ञंच रूपंरूपवतांवरं ।
प्रकाशयतिसन्मार्गं समाधिनिरतात्मनां ॥ १० ॥
तेजोमयं यद्रूपं वैभवं शान्तसंज्ञकं ।
उपासकानां भक्तानां सर्वसर्वफलप्रदाः ॥ ११ ॥
आमोक्षान्निर्विचारेण त्वेकैकस्य महामते ।
आराधनार्थविहितो वाचकोहि चतुर्विधः ॥ १२ ॥
संज्ञानामपदमयः पिण्डाख्यो बीजलक्षणः ।
एभ्दोग्यात्त्वयैकेन वाच्यमामन्त्रयभावितः १३॥
यत्रैकपिण्डवाक्योत्थ मन्त्रेणाथो मयात्मना ।
अभिन्नलक्षणोवाच्य एकएवोपचर्यते ॥१४॥
तत्रवैविधिनानेन कुर्यात्ताभ्यां हिकल्पनां ।
कृत्वादौनाममन्त्रस्य बीजं पिण्डाक्षरन्तुवा ॥१५॥
नयेत्तेनाभिमुख्यञ्च वाच्यमाद्यन्तगेनवा ।
एतन्त्रचपदमन्त्रन्तु विधिनानेनवैततः ॥ १६ ॥
कुर्यां त्प्रणवपीठार्थे नमस्कारध्वजान्वितम् ।
आभ्यां शान्तस्वरूपावा देवाद मत एव हि ॥ १७ ॥

संज्ञार्थं पदमन्त्रं च विद्धि संसिद्धिलक्षणम् ।
स्व [ स्वा ] रोत्थं व्यञ्जनोत्थं वा बीजमेकाक्षरं स्मृतम् ॥१८॥
स्वरव्यञ्जनसंयोगा द्वहूर्णः पिण्डमन्त्रराट् ।
द्वाभ्यां माया तथान्ताच्च स्वरसंगो महामते ॥ १९ ॥
स्वरूपेण हि मन्त्रस्य मन्येषां सह बिन्दुना ।
स्वरेणैकेन युक्तस्य स्वरयुग्मान्वितस्य वा ॥ २० ॥
सानुस्वारस्य बीजत्वं व्यंजनस्यापि वाङ्गलिन् ।
य ॐकारः स्वशब्दस्य विसर्गो दीधितिप्रभः ॥ २१ ॥
विलक्षण रायथा [ ना ] कारो विद्धि पद्मात्मक त्रिधा ।
क्वचि पिण्डं क्वचि द्बीजं क्वचि च्छब्द मनाहतम् ॥ २२ ॥
तस्य चोद्गीयमानस्य परिणाम स्स्फुटो हि यः ।
बह्वर्णो बहुपद स्स्तुतिसम्बोधलक्षण ॥ २३॥
अविनाशी स ॐकारो बीजादीनां महद्विदः ।
प्राद् [वि] र्भा स्मणधनात: सत्याख्येना सनं [विद्धि]महत् ॥२४॥
तस्मा द्वै सायभिन्नन्तु रूपं तदुपरि न्यसेत ।
स्वविवर्तेन बीजस्य मूर्ध्नुस्थानं प्रकल्पयेत ॥ २५ ॥
प्रासे ऽप्यन्तरे नित्यं सम्पन्ने यजने सति ।
सत्रोपले पाठं यद्वा सह स्वदितयं स्मरेत् ॥ २६ ॥
भानुमत्तस्य संकोच स्तुल्य मेत न्महामते ।
क्रियावशात्तु किन्त्वत्र भेदमात्रोपलक्षणम् ॥ २७ ॥
न यत्र बीजं पिण्ड वा तत्र वै प्रणवादतु ।
आ न्वर्ण पदमन्त्रस्य यत्तदाद्योऽपि वाचकम् ॥ २८ ॥
तच्छिष्ट वि [ र्वि ] ग्रहं वर्णै स्तस्मा दुत्थाप्य वृक्षवत् ।
केवलं यत्र वै बीज पिण्ड वा पदवर्जितम् ॥ २९ ॥

तथाकाराख्यवर्णस्य क्षेत्रज्ञत्व विधीयते ।
क्षेत्रत्व मपशिष्टानां वर्णानां पिण्डरूपिणाम् ॥ ३० ॥
घेषरूस्य हि बीजस्य स्वस्थिति मंद्रा वर्ण [ जि ] ता ।
स्वभावस्स्मृति र्धाेि बीजोद्धार स्तथाकृतिः ॥ ३१ ॥
बीजत पिण्डमन्त्राणां परिज्ञेय स्सदोदयः ।
य द्वीजलक्षण मन्त्रं स्त्वाराध्यं [ सामर्थ्यं ] वैष्णवं महत् ॥३२॥
सकलैव मसंख्यानां मात्यानां भिन्नरूपिणाम् ।
तथपारपरिज्ञाना जपाद्ध्याना त्समर्चनात ॥ ३३ ॥
हवना त्सम्प्रयाश्चात निर्बीजं पद मृच्छति ।
सर्वाभिमतसिद्धि स्स्या त्साधकस्य सदैव हि ॥ ३४ ॥
पिण्डादि भ [ भं ] गवन्मन्त्र मूर्तीनामेव मेवहि ।
परिज्ञाना द्रूपे किन्तु पिण्डा नास्थैर्य मुत्तमम् ॥ ३५ ॥
नानारूपं नाममन्त्राद्य नानालोकान्तरे स्थितम् ।
भवे त्स्वपद प्राप्तिः परिज्ञाना त्पदाभिधात ॥ ३६ ॥
सबीजवा एपिण्डं वा मन्त्राणां यत्पर द्रूपम् ।
विद्यातिपद स्व स्थ फिनवाच भावयेत्परम् [ द् ] ॥ ३७ ॥
मन्त्रक्षेत्रज्ञ रूपावा यस्मा त्सर्वेश्वरो ऽच्युतः ।
व्याप्य व्यापकरूपेण वर्तते ऽनुग्रहेच्छया ॥ ३८ ॥
व्याप्यरूपेण भूलोका द्रोणा द्वारभ्य चाखिलात ।
पाड्गुण्यमहिमान्त [ भिमान ] श्च ददाति फलमुत्तमम् ॥ ३९ ॥
स्वपद भोगखिलस्य दिव्यदेहस्य कर्मिण ।
क्षेत्रज्ञ बीजपिण्डात्मा निरावरण लक्षणः ॥ ४० ॥
ज्ञान यदमळं शु [ सि ] द्ध संयच्छत्याम लाभदम् ।
शक्तिव्यक्ति मयस्य स्य जाग्रद्वृत्ते परात्मन. ॥ ४१ ॥
एवं सङ्गात्मन स्स्वप्न वृत्ते रेकाव मस्ति च ।
सुषुप्तिवृत्ते. पिण्डाख्य मन्त्रस्यैव महामते ॥ ४२ ॥

शीसात्मन स्तस्यवृत्ते श्शक्तिव्यक्तिरव मस्तिवै ।
व्यक्तिज्ञान यद्योपेक्षा नियता यद्यपि स्मृता ॥ ४३ ॥
भगव न्मन्त्रमूर्तीनां तथापि परमात्मन ।
आद्यस्य चातुरात्म्यस्य केवलस्या यथा विभोः ॥ ४४ ॥
अनुप्रधार यन्मन्त्र विद्धि तन्मोक्ष भूतिदम् ।
अतो न्यथा यदुद्दिष्ट ममिश्र मिश्रमेवहि ॥ ४५ ॥
फल भागवशा च्चैव त तथा विद्धि नान्यथा ।
ज्ञात्वैव मर्चये त्पश्चा ज्ज्ञानामन्त्रे महामते ॥ ४६ ॥
गौणमुख्यादि [ ति ] गुणैस्तु प्रादुर्भावगण विभो. ।
महाज्योति स्स्वरूपस्य सह्वै चतुरात्मना ॥ ४७ ॥
प्राग्जाग्र त्पदसत्स्थस्य हेतोमोक्त तदर्चनम् ।
इदानीं स्वविशेषेण मन्त्राध्यान क्रियान्वितम् ॥ ४८ ॥
प्रवक्ष्यामि समासेन शृणुष्वावहि तात्मन ।
विशालयूपो भगवान् स्वय विश्वातिरक्षया ॥ ४९ ॥
अध्यक्षेण स्वरूपेण समुदेत्यक्षयद्वाह ।
महिमानन्तु निश्शेष शुद्धसविं त्पुरस्सरम् ॥ ५० ॥
आज्ञायाश्च [ द्यर्थं ] दस्यस्य चातुरात्म्यस्य वै विभोः ।
यथाधारभूमिरिथाधारभूमि ष्टदेवाना चेष्टित द्विरत् ॥५१॥
विलाद्य: कान्तयोषत् श्यादिकश्च महामते ।
स लाञ्छन वैभवीय सायुध बीजमेवतु ॥ ५२ ॥
ज्ञानाद्य गुण षट्कश्च तदुक्ता ज्ञक्तयो रिरा ।
अणिमा द्यष्टक चैव स्थित्युत्पत्ति क्षया दया ॥ ५३ ॥
शक्ति स्सा चातुरात्मीया त्वै श्वरी त्वभिधायते ।
यथार्क किरण व्रात न्यंत्तवा तेज श्चो महान् ॥ ५४ ॥
स्व कारण विना सर्व मा पूरयति गोचरम् ।
स्वातन्त्र्या त्परिपूर्णत्वा तद्वत्त परमेश्वर. ॥ ५५ ॥

विहाय यत्तुरुद्वाच्यं मूर्तिशाखाचतुष्टयम् ।
षेमवीयस्य युधस्य पत्तिवेना यत्तिष्ठते ॥ ५६ ॥
उत्पत्ति स्थिति संहार भोग कैवल्य कारणम् ।
मेरयन्वै धिया चक्रं पंचार सिद्ध मुत्तमम् ॥ ५७ ॥
स्मर्तव्यं स्वस्वपदस्य स्व बीजेन स्वामलात्मना ।
आमृजेतो भ्रिपर्यन्तं सदीयं नाव मण्डलम् ॥ ५८ ॥
स्वय हेमपीषेन्दु बीजे भोक्य मलंकृतम् ।
क्रमा दुच्चार्यमाणे स्वै स्मृतोथेन पूर्ववत् ॥ ५९ ॥
पूजना त्परमेशस्य मन्दिरा दिव गच्छति ।
शृणुतद्वीज निश्चयं सावधानेन चेतसा ॥ ६० ॥
यत्प्रसादा त्परां सिद्धिं प्रयान्ति भगवन्नयाः ।
शुचौ देशे मनोज्ञेच सुलिते पुष्प भूषिते ॥ ६१ ॥
घनसारादि संयुक्ते सुरभिणा धिवासिते ।
विलिख्यमातृका चक्रं भेदे नानेन ये पुनः ॥ ६२ ॥
येन सन्दृष्ट मात्रेण शास्त्रधायाति यत्क्रमम् ।
भागादौ पंचवर्गान्तं मध्यान्तं मध्यतो लिखेत् ॥ ६३ ॥
यादयो नव नाभिस्था आद्य षोडशारगाः ।
कादयो नेमिगा स्सर्वे पूर्वचक्रे यदक्षरम् ॥ ६४ ॥
तदस्मिन्नपि भवन्तु पूजयेत् छिधिना ततः ।
शब्दब्रह्म मयं चक्र मध्ये पुष्पादिकैः क्रमात् ॥ ६५ ॥
तन्मध्या दुद्धरेदादौ सर्वेषां कारणं हि यत् ।
तदक्षरं मक्षरं चास्ता दरान्तायेन भूषितम् ॥ ६६ ॥
विद्धि सर्वेश्वरस्येदं बीजं निर्बीज कारणम् ।
एतदेवाब्ज नाभस्य विसर्ग सहितं स्मृतम् ॥ ६७ ॥

नेमिवर्गा द्वितीयं वै ततोरा त्पष्ठ मक्षरम् ।
अष्टमं नाभि देशाच्च तात्संख्यं नेमि मण्डलात् ॥ ६८ ॥
नेमिपूर्वं मतोनाभे स्सप्तमं पंचमारगम् ।
अरा च्चतुर्दशे त्वक्षा त्पश्चिमःशा गतं हि यत् ॥ ६९ ॥
नेमे रेकादशं चाथ षोडशंच त्रयोदशं ।
पंचमं नाभिदेशाञ्च नेमे रेकोन विंशकम् ॥ ७० ॥
तदन्तं सप्तमं चैव नवमं हि महामते ।
नाभे र्द्वितीयं तदनु नेमे स्तत्संख्य मेवच ॥ ७१ ॥
द्वादशंच पहिष्टेभ्यो दशमं षोडशा त्परम् ।
नाभिपूर्वं ततो वर्णं नेमेः पंचदशं हियत ॥ ७२ ॥
तुर्यसंख्य मराद्बीजं ततो नाभि श्चतुर्थकम् ।
षष्ठं नेमे श्चतुर्थञ्च मध्यम [ मा ] क्षा त्तथा हरेत् ॥ ७३ ॥
सप्तैव पूर्वदिक्स्थस्य द्वाभ्यां द्वे पंचमं ततः ।
अक्षा द्दक्षिणदिक्संस्थं नेमेरष्टादशं ततः ॥ ७४ ॥
द्वितीयंनाभि देशाच्च तदन्ते सप्तमारगम् ।
चतुर्दश मथोनेमे ष्षष्ठंनाभे स्तथा हरेत ॥ ७५ ॥
सर्वे कारणव र्मूर्धा योजनीया स्सर्मासतः ।
प्रणवाद्यानमोन्ताश्च तेजसातीव निर्भराः ॥ ७६ ॥
पद्मनाभादयो देवा वाच्या स्तेषां क्रमेणतु ।
पद्मनाभो ध्रुवोनन्त श्शक्त्यात्मा मधुसूदनः ॥ ७७ ॥
विद्याधिदेवः कपिलो विश्वरूपो विहंगमः ।
क्रोडात्मा बडवावक्त्रो धर्मो वागीश्वर स्तथा ॥ ७८ ॥
देव एकार्णवशयः कूर्मःपातालधारकः ।
वराहो नरसिंहश्चा प्यमृता हरणस्तुवे ॥ ७९ ॥
श्रीपति र्दिव्यदेहोथ कान्तात्मा मृतधारकः ।
राहुजित्कालनेमिघ्नः पारिजातहरोमहान् ॥ ८० ॥

लोकनाथस्तु शान्तात्मा दत्तात्रेयो महाप्रभुः ।
न्यग्रोध शायी भगवा नेकशृंगतनुस्ततः ॥ ८१ ॥
देवोवामनदेहस्तु सर्वव्यापीत्रिविक्रमः ।
नरोनारायण [ नारायणोनर ] श्चैव हरिः कृष्णस्तथैवच ॥८२॥
ज्वलत्परशु भृग्रामो रामश्चान्यो धनुर्धरः ।
वेदविद्भगवान् कल्की पाताळ शयनःप्रभु. ॥ ८३ ॥
प्रादुर्भाव गणोमुख्य इत्युक्तस्ते समासतः ।
शक्तिसङ्घ प्रधानोय शक्तिसङ्घ स्सउच्यते ॥ ८४ ॥
लक्ष्मीः पुष्टिर्दयानिद्रा क्षमाकान्ति स्सरस्वती ।
धृतिर्मैत्री रतिस्तुष्टि र्मतिर्द्वादशमीस्मृता ॥ ८५ ॥
प्रधानभूतां शक्तीरा नलंकाराज्नि बोधमे ।
किरीटः कौस्तुभोभाग्यः ? श्रीवत्सो भूतलक्षणः ॥ ८६ ॥
वनमाळेतिगरुडः प्रधानान् हेतिकान् शृणु ।
चक्र शङ्खो गदापद्म लाङ्गलं मुसलंशरः ॥ ८७ ॥
शार्ङ्गश्च खड्गखेटौतु दण्डः परशुरी रितः [ तिहा ] ।
पाशाङ्कुशौ सुदरश्च वज्रश्शक्ति समन्वितः ॥ ८८ ॥
इत्येत द्देवताचक्र मङ्गमन्त्रगणान्वितं ।
विग्रहेदेवदेवस्य सर्वानमवतिष्ठते ॥ ८९ ॥
वक्ष्येभावोपकरणं गीर्वाणगणमुत्तमं ।
नानाविभव मूर्तीनां योवातिष्ठेत शासने ॥९०॥
कालोवियन्नियन्ताच शास्त्रं नानाङ्ग लक्षणं ।
विद्या वि त्तयश्चैव समुद्रास्सगणा शिवाः ॥ ९१ ॥
प्रजापति समूहश्च इन्द्र स्सपरिवारकः ।
मुनय सप्तपूर्वेन्ये महास्ताराद्रिकैर्वृताः ॥ ९२ ॥
जीमूताश्चा खिळानागा स्त्वप्सरोगण_ स्तमः ।
औषध्यश्चैव पशवो यज्ञास्साङ्गा खिलाश्रये ॥९३॥

विद्याचैवा पराविद्या पावकश्चैवमारुतः ।
चन्द्रार्कौ वारिवसुधे इत्युक्तममलेक्षण ॥९४॥
चतुर्विंशतिसंख्यश्च भवोपकरणं महत् ।
भवस्साक्षात्प्रधानन्तु व्यापकोजडलक्षणः ॥९५॥
मन्त्रमन्त्रेश्वरन्यासा स्सोपिपूज्यस्व मेतिच ।
इत्येवमादि सर्वेषां भविनां परमेश्वरः ॥९६॥
स्थितोन्तर्यामिभावेन रूपमासाद्य निष्कलं ।
आप्तकामस्सभगवान् स्वव्यापारवशेनतु ॥९७॥
स्वांशक्तिमवलंब्यास्ते पद्मनाभात्मना पुनः ।
धराम्बुहुतभुग्वात मूलनालदलोदरे ॥९८॥
चतुस्त्वाद्यमयेपद्मे गगनैकार्णवोदरे ।
मानसे ऽ नन्तशयने दिव्यबोधतनुर्विभुः ॥९९॥
सहस्रांशु सहस्राभ उत्तानस्थोहिलीलया ।
ततो विविधरत्नाभे तदीये नाभि पुष्करे ॥१००॥
मोद्यहंस्तु स्ववीर्येण विद्यासामर्थ्य विग्रहाम् ।
मूर्तैर्ध्वजादिकैस्सर्वै रावृतस्तत्परायणैः ॥१०१॥
अनन्तचेष्टस्यविभो रित्येवं त्वीश्वरात्मनः ।
भोगापवर्गदं रूपं शान्तव्यक्तंच वैभवम् ॥१०२॥
प्रागवस्तुर्यपदादस्थं स्मरेद्धृत्कमलाम्बरे ।
तदधःकर्णिकामध्ये त्वभिजातो [ शान्तो ] पलद्युतिम् ॥१०३॥
दिशोदश द्योतयन्तं नानागात्ररुहैश्चितम् ।
सौम्यद्विरष्टवर्षंच राजीवदललोचनम् ॥१०४॥
भ [ भा ] चक्र चक्रयुग्दे [ हृदे ] यं गदा देहं [ हारं ] तथैवच ।
शक्ति माधार संज्ञांच मोद्वहन्तं स्मरेद्ध्रुवम् ॥१०५॥

स्थितोपस्तम्भभूतस्तु अस्मिन्वै विश्वमन्दिरे ।
नभोनिष्ठात्मनाचैव भूमिका भिन्नलक्षणे ॥१०६॥
प्रागादावीशकोणान्तं संस्मरे त्कर्णिकोपरि ।
द्विपट्कं यदनन्ताद्यं वरुशाय्यन्त मग्निगम् ॥१०७॥
तासंख्यं केसरोर्ध्वस्थं तद्व त्कूर्मादिकं न्यसेत ।
न्यग्रोधशायिपर्यन्त मभृताधारमण्डले ॥ १०८ ॥
सूर्यचन्द्र [क्र] समारूढं दलभूमिगमं [तं] ततः ।
पाताळशायिपर्यन्त मेकश्रृंगादिकं हिं यत् ॥ १०९ ॥
न्यस्यैव ममृतोत्थैस्तु भोगे रभ्यर्च्य मानसैः ।
यथायद्ध्यानयोगेन प्राग्व त्सृष्टिक्रमेण तु ॥ ११० ॥
पुन स्संहृतियोगेन पाताळशयना त्तु वै ।
यावद्गगनशाय्यंत मर्चनीयं फलाप्तये ॥ १११ ॥
य उक्त स्समुदाये स्मिन् हृद्यागे देवतागणः ।
यजे द्विसक्रमेणैव विधिना नेन वं पुनः ॥ ११२ ॥
त्रिकं [ त्रयं ] पद्मे द्विपट्कानां त्रिस्थानस्थं प्रकाशितम् ।
पृथ क्पृथ क्तदेकैकं न्यस्य न्यस्य यजे त्क्रमात् ॥ ११३ ॥
प्रतिद्वादशकस्याद्यः प्रागुक्तेन क्रमेण यः ।
तं निष्कळात्मना पूर्वं मिष्ट्वा वै कर्णिकोदरे ॥ ११४ ॥
समुत्थाप्य ततो मध्या त्तमेव सकळात्मना ।
न्यस्ये द्वाधारभूतश्च सर्वत्र कमळा दधः ॥ ११५ ॥
तमेवार्घ्यादिना ऽभ्यर्च्य कमळच्छदकोटिगम् ।
द्वितीयं कर्णिकामध्ये तदग्रे केसरोर्ध्वगम् ॥ ११६ ॥
ध्यात्वा न्यस्य तृतीयन्तु ततः पत्राष्टकेष्टकम् ।
द्वादशाख्यादि सर्वत्र गगने पद्मनाभवत् ॥ ११७ ॥
भद्रोपकरणीयाभि र्देवताभि स्समावृतः ।
य स्त्वद्वदेवतासंघ स्सर्व स्स [त्रि] कमळा द्धृदि ॥ ११८ ॥

न्यस्यैव मर्चनं कुर्या द्दिव्ये भोगे स्तु पूर्ववत् ।
मूर्तौ मण्डलमध्येष वह्नि रश्मौ जलाशये ॥ ११९ ॥
स्वमन्त्रेणाम्बरस्थस्य मूर्त स्रक्चन्दनादिकम् ।
दातव्यं कर्णिकामध्ये न्यस्तमन्त्रस्य मूर्धनि ॥ १२० ॥
प्रतिबिम्बति तयस्मा त्तद्वच्छद्वारदर्पणे ।
यस्य यस्य यदा यस्मि न्नाकारे रमते मनः ॥ १२१॥
भोगाप्तये वा मोक्षार्थं तं तं मध्ये ऽर्चयेत् तदा ।
तदुद्देशेर्चनं कुर्या त्तास्थानमच्युतस्य वा ॥ १२२ ॥
नानासिद्धिप्रदानाच्च सह संहारमूर्तिना ।
एव मेषांगमन्त्राणा मर्चना दीप्सितं लभेत् ॥ १२३ ॥
तत्रायं हि विशेष स्स्या द्विन्याले तन्निबोध मे ।
भूलोकाखिलसिद्धीना माप्तये ताव दुच्यते ॥ १२४ ॥
प्राग्वद्वादशकाद न्या [ न्या ] देकश्शृंग मपी यजेत् ।
श्राव्यं यदंगमन्त्रन्तु कर्णिकायां न्यसे त्ततः ॥ १२५ ॥
अथ केसरकोटिस्थं स्मरे च्चतुरसो परम् ।
पश्चा द्दला त्क्रमांतरथं दलाग्रस्थं द्विरष्टकम् ॥ १२६ ॥
पाताळ शायिनं [ शयनं ] मध्ये मन्त्रस्योपरि पूर्ववत् ।
अपाये निश्शेषपाताळसिद्धीना माळयं परम् ॥ १२७ ॥
तच्छक्त्यनुगृहीतस्तु मन्त्रेशः कर्णिकागतः ।
समस्तसिद्धिदाने स्या दाश्रितस्यांगसंज्ञकः ॥ १२८ ॥
एव मेव भुव र्लोकसिद्धीनां प्राप्तये सदा ।
स्मर्य ऊर्ध्वं शरशायी त्वनन्तः कमला दधः ॥ १२९ ॥
यजे द्गगनसिद्धीना मशेषाणा मथाप्तये ।
खस्थंन्यग्रोधशयनं कूर्म कमलमूलगम् ॥ १३० ॥

एते षाम पि संचारो नानासिद्ध्यपेक्षया ।
प्रधानमन्त्रव त्कुर्यां त्स्माग्व त्सर्वत्र सर्वदा ॥ १३१ ॥
एव मायैस्तु विधिव द्रोगे नानाविधोत्थितैः ।
यः स्थित स्त्रिविधे सर्गे विभवः पारमेश्वरः ॥ १३२ ॥
पौष्कराख्ये च वाराहे प्राजापत्ये महामते ।
सूक्ष्मत्वेन च निश्शेषं प्रत्येकस्मि न्हि वर्तते ॥ १३३ ॥
समाश्रित्य बृहत्त्वं च तृतीयांशेन तिष्ठति ।
यथोक्तक्रमयोगेन युक्त स्त्वर्गत्रयेतु वै ॥ १३४ ॥
परिवारं समादाय भवोपकरणान्वितम् ।
दिक्पालकगणोपेतं समाक्रम्य तमेव हि ॥ १३५ ॥
अभिधानाक्षरं पूर्वं मरान्ताद्येन भूषितम् ।
योक्तव्य मभिधानेन पूर्वोद्दिष्टेन वर्त्मना ॥ १३६ ॥
पूजार्थं चैव सर्वेषां क्रमे स्मिन् सम्प्रकाशितम् ॥ १३६— ॥

इति श्रीपाश्चरात्रे श्रीसात्वतसंहितायाम्
विभवदेवतान्तर्यागो नाम

नवमः परिच्छेदः ॥ ९ ॥

---

अथ दशमः परिच्छेदः ।

---

नारदः ।

अथलाङ्गलिनाविप्रा श्चोदित-परमेश्वरः ।
यत्तदाकर्ण्यतामद्य चेतसा संयतेनतु ॥१॥

सङ्कर्षणः ।

मण्डलेष्वी षाहिनाथ जलमध्ये त्वयार्चनं ।
नोक्तं विभवदेवानां व्यक्तं कृत्वा तदादिश ॥ २ ॥

भगवान् ।

सुलक्षणेतु भूभागे समेपूर्वो क्तलक्षणे [ सम्प्लुवे ] ।
तत्रमण्डल [ प ] मालेख्यं सर्वेषामेकमर्चने ॥३॥
चतुरश्रं चतुर्द्वारं पीठा वयवयान्वितं ।
षट्त्रिंश द्दळपद्मेन मध्यतश्चाप्यलंकृतं ॥ ४ ॥
वितानध्वजसंवीतं किंकिणीदर्पणान्वितं ।
तोरणध्वजनच्छत्र चामर स्रग्विमण्डितं ॥५॥
व्यक्तानुक्तमशेषन्तु कृत्वापूर्वोक्तलक्षणं ।
ततस्तु करयोर्न्यस्य विग्रहे बीजमैश्वरं ॥६॥
समालम्ब्यच तादात्म्य महिमानंतु निश्चलं ।
बध्वाचवैभवीं मुद्रां स्पृशेत्सर्वांगकंतया [ था ] ॥ ७ ॥
समुच्चार्यधियासर्व म्मन्त्रग्रामं क्रमास्थितं ।
सर्वदेवमयंदेह मेवंस्मृत्वा स्वकम्पुरा ॥८॥
अन्तश्चक्र निविष्टन्तु संस्मरे द्भद्रपीठवत् ।
मण्डलं देवताधारं चक्रमन्त्रेण तद्यजेत ॥९॥
ततस्तु सर्वमन्त्राणां विन्यासं तत्रचेतसा ।
समाचरे द्यथायोगं पुष्पदान पुरस्सरं ॥१०॥
ध्रुवात्मा भगवान्मध्ये कर्णिकाया मतःक्रमात् ।
दिक्चक्र मभिवीक्षन्तं प्राग्दळादादितोन्यसेत् ॥ ११ ॥
पाताळशायि पर्यन्त मनन्ताद्यं म्महामते ।
न्यसे न्कमल बाह्येतु ईशा द्वह्नि पदावधि ॥१२॥

चतुष्टयं किरीटाद्यं मन्त्राणां पूर्वचोदितम् ।
उदग्दक्षिण आग्नाचे पैठीये दिक्चतुष्टये ॥ १३ ॥
द्वंद्वदपन्तुदक्ष्यायं विनियेऽयं यथाक्रमम् ।
तत्रैयपेद्राकोणात्तु यावद्वायुपदावधि ॥ १४ ॥
द्वंद्वद्वंद्वामार्यंच मापन्तं सन्निवेश्यच ।
बहिः पीठस्यनिकटे चाग्नेयोपेपवन्निराट् ॥ १५ ॥
चक्रा स्कमळ पर्यन्तं चतुष्कं शार्ङ्गतापदात् ।
वायुकोणावधेयांव स्पीठवाह्येतु योजयेत ॥ १६ ॥
सौम्ययाम्याप्य पूर्वाशा वस्थितंच द्वंद्वयम् ।
दांगकार्यं परश्वन्त मष्टकं तद्वदेवहि ॥ १७ ॥
याम्यसौम्याप्यपूर्वाशा गतं द्वया चतुष्टयम् ।
पाशाद्यं यज्ञपर्यन्तं शक्तिं कोण चतुष्टये ॥ १८ ॥
आईशकोणनिकटाव पदात्तन्निकटेस्थितम् ।
प्रदक्षिण क्रमेणैव पद्मं याव द्वितीयकम् ॥ १९ ॥
कालादीनांश्चविन्यासः कार्यश्चानुक्रमेणतु ।
यज्ञान्तानां स्महाद्युद्दे षोडशानां यथास्थितम् ॥ २० ॥
क्रमात्पूर्वोत्तरेकोणे न्यसेद्दक्षिणपश्चिमे ।
विद्या अविद्या द्वयं पद्मे स्वपदस्थे मिमाप्तते ॥ २१ ॥
चन्द्रादित्या वुदग्याम्ये द्वारयो र्विनिवेश्यच ।
प्रत्यग्द्वार गत स्तौयं प्राग्द्वारे विन्यसेद्दराम् ॥ २२ ॥
चतुर्णामपकोणानां मन्यक्त स्मण्डलाद्बहिः ।
सम्पजे द्भवनाम्नाचै यस्मा त्तान्यो भवस्मृतः ॥२३ ॥
ततःकामात्मतत्वानां दशकं सिद्धतांगतं ।
भगवत्तुल्यसामर्थ्यं सार्वज्ञ्याद्दि गुणैर्युतम् ॥ २४ ॥
वियुक्तं प्राकृताद्दुःखा द्वियुक्त श्चेश्वरेणतु ।
भवसन्तारकत्वेन मण्डलस्य बहिर्न्यसेत् ॥ २५ ॥

उपेन्द्रः पूर्वदिग्भागे दक्षिणेदुरतिक्रमः ।
महाह्नदः पश्चिमेतु वसुरेता स्तथोत्तरे ॥ २६ ॥
व्यस्परतेजो धराख्यस्तु पूर्वदक्षिणमध्यगः ।
नैऋतेतु महाकर्मा त्वग्राह्यः पश्चिमोत्तरे ॥ २७ ॥
पूर्वोत्तरे वर्धमान स्साक्षी गगनगोचरे ।
आधारनिळयं नाम्ना सर्वस्याधोगतं स्मरेत् ॥ २८॥
तेषां यद्धि स्स्वमन्त्रेण द्विक्क्रमेणतु हेतिराट् ।
स्वमरीचिगणेनैव भासयन्तं निवेश्यच ॥ २९ ॥
न्यस्यैव मर्चनं कुर्या न्मन्त्रमुद्रान्वितेन च ।
निरीक्षणादिशुद्धेन मर्घ्यस्रक्चन्दनादिना ॥ ३० ॥
यथाक्रमेणोदितानां मादिदेवं यजे त्ततः ।
उपरिष्टात्तु सर्वेषां स्वपदस्थन्तु पूर्ववत् ॥ ३१ ॥
प्राग्वात्सुसंस्कृते कुण्डे तत्र स्संस्कृत्य पावकम् ।
तन्मध्ये सर्वमन्त्राणां न्यासं कुर्याच्च यागवत ॥ ३२ ॥
माक्समित्सप्तकेनैवं तर्पये द्वै यथाक्रमम् ।
मन्त्रपूतं हि निश्शेषं हवनान्तं सकृ त्सकृत् ॥ ३३ ॥
भवन्ति सम्मुखा मन्त्रा स्साधकस्याग्निमध्यगाः ।
सन्तर्प्याथ तथा कुर्या त्सहस्रशतसंख्यया ॥ ३४ ॥
एकैकस्य तु वै होमं तिलै राज्यसमन्वितैः ।
दद्या त्पूर्णाहुतिं पश्चा त्सर्वेषां तर्पणे कृते ॥ ३५ ॥
पुन रभ्यर्चनं कुर्या देव वै मण्डलान्तरे ।
यथाक्रमेण सर्वेषां पुष्पधूपै स्तु केवलैः ॥ ३६ ॥
सकृ द्ध्यानसमेतन्तु चतुर्थोप्यथवाष्टधा ।
क्रमा त्समस्तमन्त्राणां प [ पु ] रावर्तन माचरेत ॥ ३७ ॥

सुशुभेनाक्षसूत्रेण स्वके वा करपर्वभिः ।
ततोऽर्घ्यकुसुमैर्गन्धैः पूरयित्वा करांजलिम् ॥ ३८ ॥
सर्वदेवमयं मन्त्रं स्मृत्वोच्चार्य च तं क्षिपेत् ।
सर्वत्र सर्वदानेन क्रमेणेष्टाच्च भक्तितः ॥ ३९ ॥
प्रदर्श्य सर्वमन्त्राणा मेकां मुद्रां च वैभवीम् ।
प्रणवेन सहस्रांशुसन्निभां सर्वसिद्धिदाम् ॥ ४० ॥
श्लेष्यपाणितले द्वे प्राङ्नम्रे कुर्या छताग्रणम् ।
विविश्य मन्तरीकृत्य सहांगुष्ठद्वयेन तु ॥ ४१ ॥
मणिबन्धद्वयं कुर्या त्सुलग्न मतिनिश्चलम् ।
करयुग्म सगर्भन्तु सन्धार्य स्वधियांचलम् ॥ ४२ ॥
ऊरुमध्ये निषण्णेतु कुर्याद्वे बाहुकूर्परे ।
गुप्तं कृत्वा प्रयत्नेन बन्ध मस्या स्समाचरेत् ॥ ४३ ॥
सर्वधा सर्वसिद्धीना माप्तये स्वमलेक्षण ।
तीर्थमध्ये स्वहृत्पद्मे बिम्बे वेद्यां स्थलेतु वा ॥ ४४ ॥
वह्निगर्भेतु निर्धूमे नित्य मर्मिम श्चतुष्टये ।
मन्त्राणा मर्चनं कुर्या त्सिद्ध्यर्थमपि मुक्तये ॥ ४५ ॥
सजलाञ्जलिपूरे स्तु तीर्थेष हृदयाम्बुजे ।
भावनामृतजे भोगे मूर्तौ स्थण्डिलके बहिः ॥ ४६ ॥
समित्सप्तकपूर्वै स्तु याज्यै र्वह्निगतं तिलैः ।
पूजयित्वा यथान्यायं प्रत्येकस्मि न्पदे क्रमात् ॥ ४७ ॥
संन्यासं संचय वापि कृत्वा सम्य क्कृतस्य वै ।
मन्त्ररूपानुकारिण्या मुद्रणीयंच मुद्रया ॥ ४८ ॥
फलार्थं प्रसवं येन नैति संन्यासकारिणाम् ।
फलपर्यवसान न्च काल मागमचोदितम् ॥ ४९ ॥

भर्तु र्नो युज्यते येन सिद्धा ये[र्थे] स्तु फलार्थिनाम् ।
कालानुकालमुद्राणां यो बन्धः परिचोदितः ॥ ५० ॥
उक्तप्रयोजना दन्य स्सविघ्नविनिवृत्तये ।
मुदं कर्माग्मतत्वानां ददत्यमलयाजिनाम् ॥ ५१ ॥
द्रावयित्री च दोषाणां बाह्याभ्यन्तरचारिणाम् ।
तेन मुद्रा स्समाख्याताः कृतस्यापि च मुद्रणात् ॥ ५२ ॥
तस्मा त्स्वाभाविकं कृत्वा यद्वं वा मानसं पुरा ।
स्वेन स्वेन तु मन्त्रेण स्मरे त्मार्स[द्व्याप्यं] सदैवहि ॥ ५३ ॥
चैतन्येनानुविद्धो य श्शाखासंचय यद्यपि ।
तत्रापि मन्त्रो ऽव्यापस्त स्तत्कार्यं सम्प्रयच्छति ॥ ५४ ॥
एवं कृते ततः कुर्या न्मन्त्राणा मण्डलान्तरात् ।
पूर्ववच्चोपसंहार मेकस्मिन् गगनस्थिते ॥ ५५ ॥
स्मृत्वा परात्मना तंच स्वसंविद्गगने हृदि ।
विश्रान्तं भावये द्देवं स्वभावेन समन्वितम् ॥ ५६ ॥
द्विजातेर्दत्तशिष्टस्य पुष्पपत्रादिकस्य च ।
विहित स्त्वम्भसि त्यागो विप्य स्तेनार्चं ने कु [नाह] ते ॥ ५७ ॥
धर्तव्यं न चिरं चाग्रे यत्पुरा विनिषेदितम् ।
नैवेद्यं मन्त्रमूर्तीनां किंचित्पुष्पफलादृते ॥ ५८ ॥

इति श्रीपांचरात्रे श्रीसात्वतसंहितायाम
विभवदेवतार्चनं नाम

दशमः परिच्छेदः ॥ १० ॥

## अथ एकादशः परिच्छेदः ।

नारदः ।

श्रुत्वैव मद्भुतमुखा द्वनमाली मुनीश्वराः ।
पुन स्सश्चोदयामास यदाकर्णयता च तत् ॥ १ ॥

संकर्षण. ।

यथावत् ज्ञातु मिच्छामि मण्डलध्यानलक्षणम् ।
भगवन् भवभीताना मुपकाराय तद्वद ॥ २ ॥

श्रीभगवान् ।

संसाध्य यष्टियोगेन सूत्रा [ यां ] त्पूर्वापरे पुरा ।
तद्दिग्द्वयान्तरे दद्या त्प्राग्वै सूत्रचतुष्टयम् ॥ ३ ॥
समांशेन द्विधा कृत्वा स्फुटं [ ट] मध्या त्तद् [ ततः । ] त्पच?।
साधितेना धमानेन मा ववत्यकस्थेन तन्तुना ॥ ४ ॥
दक्षिणोत्तरभागाभ्यां समुत्पाद्य चतुष्पथौ ।
सूत्रं पूर्वापरसमं कृत्वा तदुपरि क्षिपेत् ॥ ५ ॥
पुन रर्धसमं दिक्षु दत्वा कोणचतुष्टयम् ।
चतुष्पथचतुष्केण नयेद्वच [ द्र ] किं प्रसार्य [ र्य ] वै ॥ ६ ॥
समसूत्रचतुष्कश्च चतुरश्रप्रसिद्धये ।
तद्विभज्या ष्टदशभि श्चतुर्दिक्षु पदै स्समैः ॥ ७ ॥
क्षिपे त्सूत्रगणं तत्र धटिका रेणु [ कण ] रञ्जितम् ।
मध्ये पद्मावीन कुर्या द्रागपङ्क्तिश्चये क्रमात् ॥ ८ ॥
तद्बाह्येः पदपङ्क्त्या तु पीठ मष्टदिगन्वितम् ।
तस्य भागचतुष्कोऽथ दिक्चतुष्कं प्रकल्प च ॥ ९ ॥

विदिक्चतुष्कं त्रिपदं पङ्क्तया पीठप्रदक्षिणम् ।
प्रदक्षिणक्षिते बोद्धा चतुष्कं दिक्चतुष्टयात् ॥ १० ॥
चतुर्णान्तु चतुर्णान्तु पाद्या द्वाद्यं द्वयं द्वयम् ।
शोधयित्वा तु तद्बाह्या चतुष्कं द्वारसिद्धये ॥ ११ ॥
चतुष्टयं क्रमेणैव भूयो दिक्षु पदं पदम् ।
तथाह्याभ्यन्तरगतं शोधनीयं प्रयत्नतः ॥ १२ ॥
पुन स्सर्वपदाभ्यां तु पट्कं पट्कं तु चान्तरात् ।
सम्मार्ज्य पूर्णशोभार्थं तत्र स्कोरद्वाष्टकम् ॥ १३ ॥
यथा दिक्षु स्थितं कुर्यात्पूजनाय द्विचोत्तमाम् ।
बाह्यस्थपद पार्श्वा [ पीठा ] त्तु त्रीणि त्रीणि च लोपयेत् ॥ १४ ॥
त्रयाणा मन्तरस्थं य त्पद मेकात्मतां नयेत् ।
उपशोभं तु तं विद्धि कुर्या च्छीराब्जभूषितम् ॥ १५ ॥
पंचकं पंचकं कोणा द्वौपौ नीत्वा ख्यं पुरा ।
शेषैः कोणन्तु निर्वाप्य सान्तरं च ततो बहिः ॥ १६ ॥
दद्या त्सूत्रत्रयंचैव मध्येथ कमलं लिखेत् ।
षट्त्रिंशद्दळसंयुक्तं तस्य लक्षण मुच्यते ॥ १७ ॥
पीठावनि समांशेतु चतुर्थांश पदात्पुरा ।
समुद्धृत्य भ्रमं कुर्या द्ब्रह्मस्थानाच्चतन्तुना ॥ १८ ॥
दिक्सूत्राणां चतुर्णांतु एकैक हि यदन्तरम् ।
वृत्तावधे स्समैर्भागैः पत्रसंधे विभज्य च ॥ १९ ॥
पङ्क्तिर्हीनं शतं सार्धं सूत्राणां तत्र निक्षिपेत ।
सूत्रंगात्पदसंस्थं च तदाश्रित्याब्जपल्लवं ॥ २० ॥
कुर्या द्वाग चतुष्केण यथा तदवधारय ।
सव्यापसव्ययोसूत्रे अन्तरस्य निरन्तरे ॥ २१ ॥

तयोरंश समं कुर्या दळाग्रादंकमन्तरे।
तदुद्देशात्तु सूत्रेण तदंकान्तर्गतेनच ॥ २२ ॥
अर्धचन्द्र द्वयंकुर्या त्तेन सूत्रेणवैसमं।
पुनरभ्यन्तरे सूत्रं तत्सूत्राभ्यां निरोध्यच ॥ २३ ॥
पत्राग्र मानयेत्तस्मा द्वहिस्तं शृंगसन्निधेः।
द्वांछयमानं दळाग्रन्तु विधिना नेन सिध्यति ॥ २४ ॥
दळाग्र ब्रह्मदेशाभ्यां तुरीयांशेनचान्तरात्।
भ्राम्यैकर्णिकावृत्तं द्वयंशमानेन केसरं ॥ २५ ॥
दळाग्रगांशवै मध्या द्वयोमार्थ भ्रामयेत्ततः।
कृत्वैवं वर्णकै पूतैः पूरणीय स्महोज्ज्वलैः ॥ २६ ॥
दक्षापवितता पीतां सबीजां विद्धिकर्णिकां।
रेखान्वितानि पत्राणि सर्वाणि सुसितानिच ॥ २७ ॥
केसर त्रितयं कुर्या त्पत्रेपत्रे रुणप्रभत्।
दळान्तराळसमितं वृत्तमाळं त्वलप्रभ ॥ २८ ॥
सितानि पीतकोणानि रक्तं तद्दिक्चतुष्टयम्।
राजोपळप्रभांवीथीं पत्रमाला स्वलंकृता ॥ २९ ॥
पश्चिमांशा द्विनासर्व द्वाराण्यम्बुजपत्रवत्।
कृष्णानि सर्वशोभानि द्वारोद्देश स्थितानिच ॥ ३० ॥
तद्वधो कृतितुल्यानि सूपशोभानि गर्भयत।
कोणानि केसराभानि सितशंणा न्वितानिच ॥ ३१ ॥
शोण हेमादिवर्णंच क्रमाद्रेखागणंबहिः।
कृत्वैवमनुसन्धाय सर्वामायेन देहवत् ॥ ३२ ॥
रजांसिविद्धिभूतानि सितपीतादिदानिच।
सन्मात्रा ण्युपशोभानि शोभानिरत्नानितु ॥ ३३ ॥

एवं सर्वाणि कोणानि स द्वाराणीन्द्रियाणिच ।
बाह्दिरावरण यद्वै सरजाद्य वितयं हि यत् ॥ ३४ ॥
मन स्तुवितताविधौ गर्वपीठ मुदाहृतं ।
धीपद्मे तदधिष्ठाता बीजात्मा चिन्मय पुमान् ॥ ३५ ॥
अमूर्त ईश्वर श्चात्र तिष्ठ त्यानन्दलक्षणः ।
यस्य सन्दर्शनादेव शश्वद्भावः प्रसीदति ॥ ३६ ॥
ससंगाना मसंगानां वपुष्पाते कृते सति ।
प्रायशो मुक्तिभाजां च त्विह जन्मैव देहिनाम् ॥ ३७ ॥
देव आस्ते इतां हित्वा यदि रन्तश्च कर्मिणाम् ।
अन्यथा दृष्टमात्रा द्वै कथ माहात्म्य मेति वै ॥ ३८ ॥
अत स्संवेदनसम मस्तित्व [ त्व ] प्रतिपादकम् ।
यथास्वलक्षण तत्त्वं तत्त त्सर्वंच सिद्धिगम् [ सन्निग ] ॥ ३९ ॥
वस्तुत्वेन गृहीत्वैव मण्डल पूर्वनिर्मितम् ।
नाम्नाञ्जनाभमुवन सर्वंतु लक्षयकरम् ॥ ४० ॥
तत स्तस्मिन् क्रमेणैव ध्यात्वैकैक निवेशयेत् ।
पूर्वोद्दिष्टेन बीजेन स्वाकारं परमेश्वरम् ॥ ४१ ॥
अथैवं भाजिता स्क्षेत्रा श्चतुरश्रा न्महामते ।
पूर्वोद्दिष्टानि धिष्ण्यानि यथा कार्याणि तच्छृणु ॥ ४२ ॥
पंचम ब्रह्मकर्मांश्च न्मम प्राग्दिग्यवस्थितम् ।
अश दीर्घेन तत्स्थेन कुर्या त्सूत्रेण लांछनम् ॥ ४३ ॥
अर्धचन्द्रसमाकार भागयुग्मस्य चान्तरे ।
दक्षिणोत्तरभागाभ्यां तदध स्तत्सम तथा ॥ ४४ ।
लांछनद्वितयं कुर्या तिर्यक्सस्थानसंस्थितम् ।
भागद्वादशकस्यैक्य स्या त्पङ्क्तिद्वितया तथा ॥ ४५ ॥
ब्रह्मकर्म चतुर्थ य स्त्वव्यामान च पूर्ववत् ।
मर्मतस्य च पक्षस्था वेक्रम मान्तरीकृतौ ॥ ४६ ॥

ताभ्यां मध्यस्थितेनैव सूत्रेणैतत्प्रजायते ।
पुन र्मध्या द्वितीयं यत मर्म चोर्ध्वं प्रवर्तते ॥ ४७ ॥
तस्माद्वैश्यन्तरीभूतं चतुर्थं पक्षयो र्द्वयोः ।
मर्म तत्स्थेन सूत्रेण वृत्तार्धे पूर्ववल्लिखेत् ॥ ४८ ॥
ब्रह्मकर्मणि पश्चस्य प्रत्यग्दिक्संस्थितस्य च ।
मर्मणो प्यथ वै सूत्रं कृत्वा तत्सम्प्रसार्यच ॥ ४९ ॥
यावद्वृत्तार्धकुण्डस्य शृंगकांठे स्तु सन्निधिः ।
एवं सूत्रद्वये दत्ते धिष्ण्य शंखाकृति र्भवेत् ॥ ५० ॥
तस्य भागसमा कार्या लांछने मेखला बहिः ।
पूर्वोक्तमर्मगे स्तूत्रे यथा तदवधारय ॥ ५० ॥
द्व्यंशार्द्धेन सूत्रेण नवचन्द्र कलासमम् ।
चतुर्णा मन्तरेखानां प्राग्दिक्कुर्याच्चलांछनं ॥ ५१ ॥
द्वावद्वि पद्माभ्यान्तु वृत्ततुर्यांश सम्मिते ।
द्वेलांछने समेकुर्या देकभागादिके तथम् ॥ ५३ ॥
तासमे ह्यपरे द्वेवे यदालांछपंचलांछनैः ।
दक्षिणोत्तरभागाभ्यां पश्चात्सूत्रद्वयं क्षिपेत ॥ ५४ ॥
कृत्वाखसम मर्मस्थं पूर्वोद्दिष्ट क्रमेणतु ।
जीवसूत्रस्य पाश्चात्ये भागे पार्श्वद्वयेस्थितम् ॥ ५५ ॥
भागद्वयं द्वयं लांछयं योन्यर्थचार्धवृत्तवत् ।
तच्छृङ्ग कोटिगेसूत्रे कृत्वा ते सम्प्रसार्यच ॥ ५६ ॥
खातभूभागपर्यन्तं तत्पद्म द्वयत्रयत ।
जायेत सर्वकुण्डानां योनिरेवंविधाशुभा ॥ ५७ ॥
भागार्धमान सूत्रेण योनेराभ्यन्तरेपुनः ।
अर्धवृत्त द्वयं दद्या त्तद्व स्सूत्रद्वयान्वितम् ॥ ५८ ॥
खातस्यान्तर्गतोवर्ज्यं श्चतुर्थांशस्तु कोष्ठकात ।
कोष्ठार्ध निम्नेनच्छेयं तासमंयापुरोदितं ॥ ५९ ॥

दैर्घ्यांत्पादाधिकाकार्या योनिर्वै पृष्ठ उन्नता ।
गजोष्ठ सदृशी चाग्रा स्पृशन्ती दशनच्छदम् ॥ ६० ॥
पुरोभाग चतुर्थांशं योने रग्रा द्विसृज्यतु ।
दद्याभावसूत्र सम्बन्धं सूत्राणां द्वितयम्परं ॥ ६१ ॥
अनुपातेनवै ताभ्या मग्रात्संकोचमाचरेत ।
भागषट्कि त्रयेणैव मेखलात्रितयम्बहिः ॥ ६२ ॥
सम्पाद्य चतुरश्रन्तु शंखं सचतथों[ तुत्रितयो ] परि
श्रांशंचमेखलानान्तु मोन्नत्यं स्वविस्तृतेः ॥ ६३ ॥
मेखलानान्तु शंखस्य यन्मध्येश्रिचतुष्टयं ।
तच्चक्रचिह्नितंकुर्या त्तल्लक्षण मथोच्यते ॥ ६४ ॥
ब्रह्म मर्म निरुद्धेन चतुर्भाग समेनतु ।
खातार्थ भ्रामणं दद्या त्क्षेत्रमध्ये महामते ॥ ६५ ॥
बहिर्भाग समानाभि स्तद्बहि द्वर्यंशविस्तृतं ।
अरंक्षत्रन्च तस्यापि नेमिभाग समा बहिः ॥ ६६ ॥
भागेनतद्बहिस्त्वेका श्चतुरश्राच मेखला ।
भ्रामण्ध्यावरक्षेत्रं वृत्तेनैकेन वैपुनः ॥ ६७ ॥
ततस्त्वष्टाष्टकदद्या द्दिग्विदिक्संस्थितम्पुरा ।
तस्यचान्तर्गसंपक्षा दष्टकं पातयेत्परं ॥ ६८ ॥
ततस्तेषां समापाद्य मराव ममलेक्षण ।
अन्तर्वृत्त निरोधेन प्रतिसूत्रस्य पक्षयोः ॥ ६९ ॥
सूत्रेण लांछने कुर्या न्नाभिनेमिभ्रमावधेः ।
एकांशा दर्धमानं च नेमिवृत्तस्य चान्तरे ॥ ७० ॥
द्वाभ्यां द्वाभ्या मराभ्यां तु मध्ये कुर्या त्प्रधि प्रधिम् ।
विस्तारमोन्नता नाभिः कूर्मपृष्ठोपमाऽरकः ॥ ७१ ॥
नेमिं दर्पणवत्कुर्या त्त्वीष न्निम्नावसानतः ।
शिष्टं पुरोदितं सर्वं मथ पद्माकृतिं शृणु ॥ ७२ ॥

भागार्धं भ्रामये द्वाभे र्बहिः केसरसिद्धये ।
भ्रामये दपरं चार्धं मरक्षेबस्य बाह्यगम् ॥ ७३ ॥
नीत्वा शेषं मनेनैव विधिना नेमिमण्डलम् ।
अरसूत्राश्रितं कुर्या ततः पत्नदळाष्टकम् ॥ ७४ ॥
केसरभ्रमरुद्धेन सूत्रेणार्धेन्दुलक्षणम् ।
तच्छृंगकोटिसंस्थेन परिधे र्बाह्यकेन तु ॥ ७५ ॥
सूत्रद्वयेन पत्राग्रं कुर्या द्वाह्यभ्रमावनेः ।
निरन्तराणा मामूला त्केसराणा म्महामते ॥ ७६ ॥
कर्णिकोच्छ्रयतुल्यानां विभागं जनयें त्स्फुटम् ।
शेषं कोणचतुष्केतु शेषं पूर्ववदाचरेत् ॥ ७७ ॥
योनि मेकेन भागेन चतुर्भि र्मेखलागणम् ।
खातं पूर्वसमं किन्तु वृत्ते वृत्तास्तु मेखलाः ॥ ७८ ॥
चतुरश्रे तदाकारा ह्युक्तं कुण्डपंचकम् ।
काळ माहुतिसंख्यां च होमद्रव्यप्रभूतताम् ॥ ७९ ॥
ज्ञात्वैव मेकहस्तात्तु कुर्या दष्टकरावधि ॥ ७९.५ ॥

इति श्रीपार्थराये श्रीसात्वतसंहितायाम्
यागकुण्डविधि र्नाम

## एकादशः परिच्छेदः ॥ ११ ॥

## अथ द्वादशःपरिच्छेदः ।

नारदः ।

एवमाकर्ण्यसत्वेव मुसली मुनिनायकाः ।
कृताञ्जलिपुटोभूत्वा पप्रच्छ जगताम्पतिं ॥ १ ॥

सङ्कर्षणः ।

यथाक्रम स्थितानाञ्च सर्वेषां [ मन्त्राणां ] लक्ष्मिनन्दन ।
स्वत्तोहं श्रोतुमिच्छामि मन्त्राणां [ सर्वेषां ] ध्यानलक्षणम् ॥२॥

भगवान् ।

त्रयाणां मुख्यपूर्वाणां ध्रुवान्तानां पुरोदितं ।
शेषादीनामशेषाणा मिदानी मवधारय ॥ ३ ॥
ध्यानं पाताल निलय पर्यन्तानां यथास्थितम् ।
एक एव जगन्नाथ स्स्वरूपाद्यैस्तु शक्तिभिः ॥ ४ ॥
नानात्वेना प्यनन्तोयो भक्तानुग्रह काम्यया ।
तस्याभिमानिकं रूपं शृणुसर्वेश्वरस्यतु ॥ ५ ॥
तुहिनाचलसंकाशं पूर्णचन्द्र समाननं ।
स्व [सु] मणि व्यंजितेनैव युक्तं फणगणेनतु ॥ ६ ॥
प्रोद्वहन्तं हलंचक्र मपसव्य द्वयेनतु ।
वामहस्त द्वयेनैव शंखं मुसलमेवच ॥ ७ ॥
निरपसव्निहिताशेष शक्ति सर्वज्ञमच्युतम् ।
मनस्यन्त सुखानांच स्कर्मणां पूरयेत्ततत ॥ ८ ॥
शक्तीशोप्यधसंचिन्त्यः पुण्डरीकनिभेक्षणः ।
इच्छारूप धरश्चैव सौम्यः प्रहासिताननः ॥ ९ ॥
व्यस्तयेच्च फलादीनां भक्ताना मनुकम्पया ।
पीडयन् स्वांघ्रियुग्मेन वसुधांच करद्वयं ॥ १० ॥
युगानुसारिकांतिश्च चतुर्वक्त्र श्चतुर्भुजः ।
मूर्तचक्र गदाहस्तः स्वमूर्ता च्छाम्बुजांकितः ॥ ११ ॥
शमं नयतिसन्तापं कमले नेन्दुकान्तिना ।
नानामन्त्र मयींविद्यां भाव [ व्यज ] यत्यमलात्मनां ॥ १२ ॥
सम्यग्वाक्पतिनाचैव कम्बुनाशब्दमूर्तिना ।
आज्ञा मर्थाक्षकेणैव गदाचक्र द्वयेनतु ॥ १३ ॥

प्रेरितेन हिनस्त्याशु साधुसन्तापकारिणम् ।
नारसिंहेन वक्त्रेण भवभीति विघातकृत् ॥ १४ ॥
पुष्णाति सर्वभूतानि वाराहेणा मृतात्मना ।
कुरुते पश्चिमस्थेन कापिले नोपसंहृतिम् ॥ १५ ॥
भक्तिश्रद्धापराणाञ्च स्मृतमात्र- समेत्यवै [ दैवहि ] ।
हृन्मध्ये गगनेभूमौ वह्निमध्ये जलान्तरे ॥ १६ ॥
चतुर्णां ब्राह्मणादीनां स्वयमेवानुकम्पया ।
चातुरात्म्येन रूपेण चतुर्धाव्यक्तिमेतिच ॥ १७ ॥
आत्मतुल्येनदेहेन शंखपद्माकितेनतु ।
मूर्तिमाद्विहलाद्येस्तु युक्तेनयदनैर्विना ॥ १८ ॥
वर्णानुरूपवर्णेन समेनाप्यसमेनतु ।
अन्योन्यानुगतेनैव पूर्वोद्दिष्टेननान्यथा ॥ १९ ॥
प्रळयानलसूर्याभः स्मर्तव्योमधुसूदनः ।
अष्टबाहुर्विशालांसो ध्यमीष्टो मकराकिरः ॥ २० ॥
शंखचक्रधरश्चैव बाणकार्मुक धृक्तथा ।
रजस्तमोभ्या म्मूर्ताभ्यां सम्प्रवृत्ति निवृत्तये ॥ २१ ॥
कर्णपीठ निविष्टश्च ध्येय पाणि युग विभोः ।
विद्याधिदैवं भगव च्चतुर्वक्त्र चतुर्भुजम् ॥ २२ ॥
लम्बकूर्च [ कर्ण ] जटा दण्ड कमण्डलधरा स्रुत्रिणम् [स्रवं]।
फुल्लरक्ताम्बुजाभास श्वेतपद्म करांकितम् ॥ २३ ॥
श्रुतीर्म्नुगाथा वक्रेभ्यः प्रोद्गिरंतमनुस्मरेत ।
निर्धूमांगारवर्णाभ मारपद्माक्षसूत्रिणम् ॥ २४ ॥
फुल्लरक्ताब्जविभव देवताद्यात्मसूत्रयम् । ]
ध्यायि द्भवपणि ॥ कपिल तेजसां निधिम् ॥ २५ ॥
दान्त स्वयंश्वरो देव स्वसाक्षिभूतो व्यवस्थितः ।
स्वटेहात्षडध्वाध्यान् स्वशक्तयुत्थान्बिभर्ति च ॥ २६ ॥

अविद्याविष्कृतानां तु भक्तानां स्वप [म्प] दातये ।
स मनादि जगन्नाथं बहिस्स्थूलतरात्मनाम् ॥ २७ ॥
द्यावापृथिव्यो रन्तरस्थं विश्वरूप मनुस्मरेत् ।
अनेकवक्त्राङ्घ्रिकर मनेकमकरांकितम् ॥ २८ ॥
यद्यप्यनेकवदन मनेकभुजभूषितम् ।
तथापि वै त्रयस्त्रिंशं द्वदनै र्विविधै र्युतम् ॥ २९ ॥
चतुरभ्यधिकै र्दिव्यै श्चत्वारिंशा न्महाभुजैः ।
ब्रह्मरुद्रेन्द्रदक्षार्क चन्द्रसिद्धा स्तथा श्रुतिः ॥ ३० ॥
पौरुषस्य तु वक्त्रस्य चोर्ध्ववक्त्रस्थिता स्त्वमी ।
पिशाचाग्निमरुच्छैल द्विपगन्धर्ववारिभिः ॥ ३१ ॥
वक्त्रैरूर्ध्वे स्थिते ध्याये द्दक्षिणं वदनं विभोः ।
पाताळादि द्रुमहामेघ लोकराशिग्रहान्वितैः ॥ ३२ ॥
वर्णै स्तार [ रास्त ] समेते स्तु ध्याये द्वक्त्र तु पश्चिमम् ।
यक्षान्तकाळजनाभाद्यै र्वसुनक्षत्रगोगणैः ॥ ३३ ॥
वक्त्रै र्वराहवक्त्रोर्ध्वे स्थिते ध्यायेच्च दक्षिणम् ।
पद्माद्यं चातुरात्मीयं मन्त्राणां दशकं महत् ॥ ३४ ॥
प्रोच्छ्रितं हि सुवर्णाद्यं तल्लांछनचतुष्टयम् ।
लांछेशास्त्राष्टकं चैव पुस्तकं चाक्षसूत्रकम् ॥ ३५ ॥
दर्वी कमण्डलु र्हैम श्चाभयं हि वरान्वितम् ।
दर्भाजिनं वत्र श्छत्रं सुशुभं चामरं सितम् ॥ ३६ ॥
स्रुक्स्रुवौ चापि कलशो वेदिर्वह्निसमन्विता ।
चन्द्रार्कमण्डले पूर्णे नागेन्द्रो मणिदर्पणम् ॥ ३७ ॥
पुष्पस्रग्व्यजनं दिव्यं विश्वपत्रलतातथा [ पात्रं तथा तथा ] ।
स्मर्तव्यास्तु भुजेष्वस्य विभोस्संस्थानकैस्समैः ॥ ३८ ॥
यथोदितक्रमेणैव व्यत्ययो नभवेद्यथा ।
आभिर्नानाप्रकाराभि र्देहोत्थाभि रिदंजगत् ॥ ३९ ॥

भारुयन्तं जगन्नाथं स्मरेद्रुक्कमलादिषु ।
हंसमूर्तिं मथात्मानं ज्ञानयज्ञभुजंस्मरेत् ॥ ४० ॥
कुन्देन्दु स्निग्धकान्तिञ्च होमकुण्ड महातनुम् ।
रजस्तमोङ्घ्रि सत्त्वत्व विग्रहं परमेश्वरं ॥ ४१ ॥
धर्माधर्मेक्षणंध्याये दृष्टीषेमात्मकेनतु ।
दक्षिणोत्तरसंस्थेन पक्षयुग्मेनराजितम् ॥ ४२ ॥
षहिस्तमेवोदकस्थ ञ्सुहिनाचलसन्निभम् ।
ध्यात्वार्चयेत्तुविधिव द्धंसविग्रह मच्युतम् ॥ ४३ ॥
षहिर्द्रव्यमयमवेक स्सामान्येनैकलक्षणः ।
सम्यङ्कीर्वर्तितस्स्वर्ग पूर्वमृच्छति चार्थिनाम् ॥ ४४ ॥
अन्तर्वेद्यां चतुर्धाय सवेकएव महामखः ।
तपोयागजपध्यान स्वरूपश्शब्देवहि ॥ ४५ ॥
याजिनामपवर्गन्तु विदधाति समापनात् ।
तयज्ञ पुरुषं [ वपुषं ] ब्रह्म वासुदेव मजंहरिं ॥ ४६ ॥
ध्याये द्वै सूकरात्मान मञ्जनाद्रि समप्रभं ।
यज्ञाङ्गचिह्नितांघ्रिच महाव्याहृतिदंष्ट्रिणम् ॥ ४७ ॥
भूर्भुवस्स्वश्शिरंच शब्दब्रह्मैकमानसम् ।
निर्द्वन्द्वं मपन्नाभा मविद्यापंकसंजया ॥४८॥
वैद्येनपोत्र मान्तेन स्वक्षयेनामलेनच ।
वासनावासितानांच जीवानां भवशान्तये ॥४९॥
महाविभूति भगवान् पूर्णषाड्गुण्य विग्रहः ।
स्वकराब्जान्तराद्भूत तत्पादादाय चांजलिं ॥५०॥
करोतिसेचनंदोषे दधानांचस्वतेजसा ।
स्थूलरूपेणतमजं वहिराराधनाविधौ ॥५१॥
आग्मातंवायुनायद्व न्निर्धूमांगारपर्वतम् ।
ध्यायेत्तद्धन्महादीप्तं याजिरक्त्रमलांतनं ॥ ५२ ॥

वद्धपद्मांजलिकस्थं त्र्यम्बकनकलोचनम् ।
घोणाग्रेणाद्वहन्तंच त्रैलोक्योत्थमलेन्धनम् ॥५३॥
कृत्वातद्रूपमस्यात्मस्य वपुस्त्कुर्यन्त म्मुखेनतु ।
धर्मस्यामान्य ममल मनादिनिधनंविभुं ॥५४॥
दुर्लभं याम्यनुज्ञानां यत्प्रसादाद्धियाविना ।
तस्यस्थूलतरंरूपं शृणुतस्मामयेपरं ॥५५॥
तुहिनाचलसंकाशं सौम्यवक्त्रं चतुर्भुजं ।
कामार्थौ युद्वहन्तंच शंखपद्मच्छलेनतु ॥५६॥
साधुमार्गे स्थितानान्तु मयच्छन्तं धियायतौ ।
सिताक्षमालं धर्मन्तु वरपाणि मतस्मरेत् ॥५७॥
षाड्गुण्यपविखिलंयस्य वस्तुजात मनश्वरम् ।
शक्तित्वेन स्वभावस्यं चिद्रूपस्यामलद्युतेः ॥५८॥
वरद्याजिनुखंध्याये दथवागीश्वरंविभुम् ।
सूर्यकान्ताग्नि संकाश मनेकभुजभूषितम् ॥५९॥
कमलंचाक्षसूत्रंच वेदिन्त्रेताग्निभूषितां ।
साज्यधारौ स्रुवस्रुचौतु विष्टरंसोमसंयुतम् ॥६०॥
दर्भाजिनं मेखलांचा प्ययसव्येषु षट्स्वमूः ।
स्मरेद्वामकरेष्वस्य पुस्तकं शंखमेवच ॥६१॥
दण्डकमण्डलुंदर्वी मेकस्मिं स्त्रितयंकरे ।
पूर्णमाग्ये स्तथारण्ये श्वदर्वाजैस्तु पंचमे ॥६२॥
स्रुङ्मूलफलपत्रैस्तु यज्ञद्रव्ये स्सदक्षिणैः ।
सर्वाश्रमोपकरणे युक्तं चमसभाजनं ॥६३॥
ध्येयमस्य भुजेषष्ठे व्रतमूर्तौ ऋंगादिभिः ।
वेदांगैरुपवेदैस्तु संस्कार स्समखैस्तथा ॥६४॥
विकारवसुधाधारे ह्यभावेतु गुणोदधौ ।
स्वशक्ति भावितंकृत्वा मनःपूर्व म्चतुष्टयम् ॥६५॥

प्रकुर्वन्तं समास्तैय स्सर्वज्ञैः पुरुषात्मना ।
निषण्णं भोगिशय्यायां तर्पणीयवर्चिस्मरेत् ॥६६॥
देवमर्णवशाय्यास्यं मूर्तैश्चक्रादिकैर्वृतम् ।
लक्ष्म्यासंवाह्यमानंच समाक्रान्तंच निद्रया ॥६७॥
वीज्यमानंहविर्भीत्या गीयमानंहिविद्यया ।
कूर्मात्मा कूर्मवद्बुध्या ध्यातव्यस्त्वचलांगलिन् ॥६८॥
द्रवत्कनकवर्णाभ स्स्वसामर्थ्यां जलाश्रयः ।
शक्त्यादिक कलाद्वंद्व द्वितीयांघ्रिस्सनासनः ॥६९॥
शक्त्यादिक कलाद्व्यश्च मोद्गिरंस्तुः श्रुतित्रयम् ।
अतसीपुष्पसंकाश श्शंखचक्र गदाधरः ॥७०॥
मत्स्योपकरणांगश्च निमग्नोद्धरणक्षमः ।
स्वशक्तिविभवाधार मिच्छाज्ञानक्रियार्चिषम् ॥ ७१ ॥
नानाविशेषविज्ञान स्फुलिंगोर्मिसदोदितम् ।
धारयन्तं स्थितं हार्दे मनूनं मोह मुल्बणम् ॥ ७२ ॥
नश्वराद् मनाक्येयं त मजं परमेश्वरम् ।
निस्तप्तकनकाभं च. ध्याये द्देवं नृकेसरिम् ॥ ७३ ॥
ज्वलदग्निस्फुलिंगाभि स्स्वदेहोत्थाभि रावृतम् ।
रथांगशंखधातारं वृद्ध भ्रूविं सुभीषणम् ॥ ७४ ॥
खरखरवकरज श्रेणि दीप्तेनाभयपाणिना ।
सम्यच्छन्तं धिया सम्यक् भविनां साभयं वरम् ॥ ७५ ॥
अमृताध्मातमेघाभ ममृताहरणं विभुम् ।
पीतांबरधरं ध्याये देकवक्त्रं चतुर्भुजम् ॥ ७६ ॥
श्रोणीतटार्पितकरं शंखचक्रविभूषितम् ।
मध्यतो दक्षिणेनैव वहन्तं गिरिरूपधृत् ॥ ७७ ॥
शुद्धज्ञानानुविद्धं च कर्मसम्भवभीतिहम् ।
दिशन्तं स्वधिया सम्यक् भक्तानां भक्तवत्सलम् ॥ ७८ ॥

मंथामथितदुग्धाब्धि क्षोभयित्वा प्रकाशितम् ।
अमृतं क्षुत्तृषादीनां प्रतिपक्ष मनामयम् ॥ ७९ ॥
शुद्धं चानश्वरं भाव्यं मायाव्यर्णवमध्यगम् ।
आत्मामृतमनौपम्य माहात्म्यंसकर्मणा ॥ ८० ॥
ध्यायेत्कमलगर्भाभं देवदेवं श्रियः पतिम् ।
कमलाद्यहेतीश विभूषितकरद्वयम् ॥ ८१ ॥
द्वयं देवीपरिणये लीलयैव समर्पयन् ।
प्रकाशाय चनादीय मात्मनः प्रकृते स्वह ॥ ८२ ॥
माकरे रमुविद्धेयं प्रकृतिः प्राकृते रहम् ।
यतोह माश्रय श्रात्वा मूर्ते मंध्येतदात्मिका ॥ ८३ ॥
या माव्रज्य सुखेनेमं दुस्तरं हि गुणोदधिम् ।
निस्तरं स्त्वचिरेणैव व्यक्तध्यानपरायणाः ॥ ८४ ॥
मदविह्वलनेत्रं च देव मुद्भिन्नयौवनम् ।
फुल्लरक्ताम्बुजाभास मत्यजन्तं निजां स्मृतिम् ॥ ८५ ॥
त्रैलोक्यविस्मयकरं कान्ताकृतिधरं स्मरेत् ।
आनन्दामृतसंपूर्णवदने नेन्दुकान्तिना ॥ ८६ ॥
कलशाकृतिरूपेण करस्थेन विराजितम् ।
लीलाकटाक्षवाग्बाणे स्सूदयन्तं सुरद्विषः ॥ ८७ ॥
द्विरेफपटलाक्रान्त सहकारलताकरम् ।
कलाग्र्यमभिमानाख्य राहुसंज्ञो विभीषणः ॥ ८८ ॥
मूर्तामूर्तेन रूपेण संयसत्यनिशंकिल ।
अग्निषोममयीं मूर्तिं कर्मिणा मुपकारिणीम् ॥ ८९ ॥
योन्तःप्राणादि रूपेण चन्द्रादित्यात्मनाबहिः ।
स्थितस्तद्विजयेध्यक्षः सत्यध्यानरतात्मनाम् ॥ ९० ॥
निष्पन्द बोधभावेन सन्तुव्यक्तं स्मरेद्बहिः ।
नीलनीरदवर्णाभं पद्मपत्रनिभेक्षणम् ॥ ९१ ॥

मध्याह्न भास्कराकारं द्वादशारकरोद्यतम् ।
श्रोणीतटनिविष्टेन वामहस्तेन लीलया ॥ ९२ ॥

म्रियमाणगदांगुर्वीं निषण्णां धरणीतले ।
अविद्याख्याचयानेमिः काळचक्रस्य दुर्धरा ॥ ९३ ॥

समाधीयं समाश्रित्य विग्रहं विधुनोतिच ।
जपयज्ञ क्रियादीनां सामर्थेन बलेनच ॥ ९४ ॥

ध्यायेत्तामसरग्रंच देवंराजोपळक्षितम् ।
विज्ञानरश्मिभिर्दीप्तं सत्वाच गरुडासनम् ॥ ९५ ॥

नानाद्यरूप भूताम सद्विद्याभुजभूषितम् ।
चक्रं पद्मं गदां बाण मंकुशं कुंत मेवच ॥ ९६ ॥

षट्सु दक्षिण हस्तेषु शक्तिं पाशौ च कार्मुकम् ।
मुसलं मुद्गरं भीमं खेटकं वाम बाहुषु ॥ ९७ ॥

देवभामृदलोभश्च स्मर्तव्यः पारिजातजित् ।
अक्लिष्ट कर्मा देवेश सयनेका द्भुतविक्रमः ॥ ९८ ॥

प्रबन्ध मतिपन्नानां भक्तानामपिदेहिनाम् ।
योबोध भूमौ संरूढो ह्यनित्यश्चानुरंजकः ॥ ९९ ॥

न्यग्रोधविटपाकारो ष्यविद्या बन्धलक्षणः ।
कर्मवृक्षस्तुयिततो मोहमाया फळावृतः ॥ १०० ॥

तदुत्पाटन सिध्यर्थ मनुग्राह्यजनंसदा ।
आविश्पास्तेंशमात्रेण कृपयाऽस्य जगत्प्रभुः ॥ १०१ ॥

अविवेकात्मनाभूत्या ज्ञानबाहु वितानधृक् ।
ऐश्वर्य धर्म वैराग्य शमास्य क्षितिशक्तिभृत् ॥ १०२ ॥

आदाय संयमास्त्रौघं नियमास्त्रगणं तथा ।
इन्द्रियादिगणं जित्वा कर्मिणां दोषदोहिनः ॥ १०३ ॥

यद्रस्य सुरजिद्रूपं तद्द्वादशभुजं स्मरेत ।
दिव्यमाल्याम्बरधरं दिव्याभरणभूषितम् ॥ १०४ ॥

चतुर्वक्रं सुनयनं वामोत्संगार्पितप्रियम् ।
खड्गं चक्रं गदां बाणं मुसलं च वरूत्तमम् ॥ ५ ॥
षट्सु दक्षिणहस्तेषु शंख मंकुश कार्मुके ।
छत्रं च फणभृत्पाशं विभो र्वामभुजे ष्वमी ॥ ६ ॥
षष्ठेनालिंगिता देवी सारविन्देन बाहुना ।
संदंसलग्नकरया देव्या तच्चित्तया ऽ निशम् ॥ ७ ॥
संवीज्यमानं विनया च्चामरेण सितेन तम् ।
लोकनाथं विशालाक्षं सर्वदेवनमस्कृतम् ॥ ८ ॥
सर्वसिंहासनारूढं ध्याये न्मीलितलोचनम् ।
पद्मासने नोपविष्टं पद्मगर्भोपमद्युतिम् ॥ ९॥
करुणाविष्टबुद्धिं च शंखपद्मकरांकितम् ।
ज्ञानवैराग्य सद्धर्म मार्गत्रयनिदर्शकम् ॥ ११० ॥
संस्मरे दथ दत्ताख्यं ज्ञानमूर्तिमकल्पकम् ।
मनुष्यमुनिदेवानां समाधिनिरतात्मनाम् ॥ ११॥
ईषल्लब्धरसानां च ब्रह्ममार्गानुसारिणाम् ।
स्वप्रभानिकरेणैव भासयन्तं च तत्पथम् ॥ १२ ॥
मनसा सह वायूना माकृतिप्रतिषेधकृत् ।
श्रुतीना म्मानसानां चा प्याचाराणां तथैव च ॥ १३ ॥
वर्णानां माश्रमाणां च परिरक्षक एव हि ।
मानसैकार्णवाम्भस्थे निष्कम्पे बुद्धिपादपे ॥ १४ ॥
अभिमानलताढ्येचा प्युपरिस्थ मनुस्मरेत् ।
प्रावृड्गिरे रिव श्यामं तेजसा ज्वलनोपमः ॥ १५ ॥
ध्वंसकृ च्छिद्रजालस्य निद्रालस्य चयस्य यः ।
उत्कृष्टद्विजरूपेण विकसत्पद्मरूपिणा ॥१६॥
स एव द्विभुजो ध्येयो दण्डदर्भाक्षसूत्रधृत् ।
दन्तज्योत्स्नाजिताज्ञान न्यग्रोधशयनं विभुम् ॥ १७ ॥

निषण्ण मीषदुत्तानं द्विभुजं शिशुरूपिणम् ।
एए पथ(?) निरस्ताक्षं शान्तनिद्रारसं स्थितम् ॥ १८ ॥
अनुज्झित स्वभावंच योगमाया बलेनच ।
त्यजन्तमादरंतंच श्वासोच्छ्वास द्वयेनतु ॥ १९ ॥
आब्रह्म भवनं सर्वं कर्मसाधानिकंहियत् ।
अपौरुषेण रूपेण संवृतावयवात्मना ॥ १२० ॥
स्वमायाजकमध्यस्थ मध्यक्षमथवंस्मरेत ।
ज्ञानादिगुणवृन्देन पक्षभूतेन भूषितम् ॥ २१ ॥
स्वोर्थंस्वलिस्ल्तं ब्रह्म मेकश्रृंग विराजितम् ।
कल्पावसान समये वहन्तश्चैवं चिन्तयेत् ॥ २२ ॥
गौरूपां विततां क्षोणिं प्रजापति गणान्वितम् ।
मुक्ताफलगणैनैव वपुषा निर्मलेनच ॥ २३ ॥
अनिमीलितनेत्रस्थ मीनात्मा भगवा नथ ।
यो नित्यं भवभीतानां बुधानां कृपया स्वयम् ॥ २४ ॥
हृत्स्थो नियतिदण्डेन मार्ताण्डायुतसन्निभः ।
जित्वा ज्ञानचक्रं भीम मिन्द्रियारिगणान्वितम् ॥ २५ ॥
सर्वेच्छ त्यचिरा द्बह्म नन्दनं सासुराय च ।
ध्याये त्तमेव हृव्यांगं श्यामं पद्मदले क्षणम् ॥ २६ ॥
अन्तर्निविष्टभुवनं जटावल्कलभूषितम् ।
छत्रं तद्वामहस्ते स्य दण्ड मन्यत्र वैष्णवम् ॥ २७ ॥
आरूप्य जाघ्रदादित्य सूर्येन्दुद्युतभुरमभाम् ।
शिखिपरस्तो अपरां हृषीकेश शक्तिर्भूतिभृत ॥ २८ ॥
स्मरेत्य ननिरुद्धात स्वयपद्मा दमृतप्रभाम् ।
आह्लादजननीं शक्ति यामिनी भावितात्मनाम् ॥ २९ ॥
वैकोरपापुरकं ध्याये त्तमेव हरितद्युतिम् ।
नानामुद्राद्युक्तेन भुजवृन्देन भूषितम् ॥ १३० ॥

खेटकेमांघ्रिदण्डेन यदंत मरिसूदनम् ।
यहन्तं खड्गेजयन्तीं देवानां च जयार्थिनाम् ॥ ३१ ॥
खड्गंचक्रं [ अब्जरोडेग ] गदोद्दण्ड बाणांकुशउमुद्गरा । ।
शक्तिः परशुशैलेन्द्रौ दशदशभुजेष्वमी ॥ ३२ ॥
शंखतोमरशार्ङ्गं च पाशशूलमहीरुहाः ।
कुलिशं क्षुरिका चैव लांगळं मुसलं मदत् ॥ ३३ ॥
वामहस्ते, स्वमीध्येया, अन्येमुद्रान्विताद्दश ।
भयविस्मय मृद्वेणी, कण्ठग्रहण लक्षणा. ॥ ३४॥
ध्येया मुद्रा विभो पंच सव्येतुं करपचके ।
वराख्यां भूतिसंज्ञांच, मुक्ताख्यां साभयान्तुवै, ॥ ३५ ॥
गोपनीन्दक्षहस्तेषु ः तारसंख्येषु च संस्मरेत ।
जगासुर्य खद्रा [ भा ] क्षेत्तु येनोक्त ममितात्मना ॥ ३६ ॥
गुणषट्क स्वरूपेण पूर्वोक्ताकृतिभिर्विना ।
स्मर्तव्य स्वचतुर्थोवै ळाञ्छनाद्य विवर्जितः ॥ ३७॥
सर्वदापरिरक्षार्तु जगत्पूर्व चतुष्टयम् ।
योगक्रिया तपोन्तस्य सद्धिभूत्यपवर्गदम् ॥ ३८ ॥
नराचः कृष्णनिष्ठश्च पृथगे वन्तचेच्छया ।
नरन्तत्र प्रयाळाभ मर्धोन्मीलित लोचनम् ॥ ३९॥
अन्तर्निविष्टभावच शब्दब्रह्मैकमानसं ।
यद्रेपलक्षणम्मन्यं स्वपमानमलक्षितम् ॥ १४० ॥
स्फाटिकेनाक्ष [सूत्रेण करस्थेनचशोभितम् ।
गणयन्नक्षसूत्रीयां नावर्तान् वामपाणिना ॥४१ ॥
अथनारायणन्देव ध्यायेत कुमुदपाण्डुरम् ।
बद्धब्रह्मांजलिशान्त हृत्पद्मार्पितमानस ॥४२ ॥
युञ्जानश्च स्वमात्मानं परस्मिन्नव्ययेपदे ।
कमण्डलुधरध्यायेत याचनाभमधोदरं ॥ ४३ ॥

निषण्ण मौषदुत्तानं द्विभुजं शिशुरूपिणम् ।
एए पथ (?) निरस्तास्त्रं शान्तनिद्रारसं स्थितम् ॥ १८ ॥
अनुज्झित स्वभावंच योगमाया बलेनच ।
त्यजन्तमाहरंतंच श्वासोच्छ्वास द्वयेनतु ॥ १९ ॥
शाम्रह्म भवनं सर्व कर्ममाधानिकांक्षियत् ।
अपौरुषेण रूपेण संवृताघयवात्मना ॥ १२० ॥
स्वमायाजलमध्यस्थ मध्यक्षमथलंस्मरेत ।
ज्ञानादिगुणवृन्देन पक्षभूतेन भूषितम् ॥ २१ ॥
स्वोर्ध्वसन्निस्तृतं ब्रह्म मेकशृंग विराजितम् ।
कल्पावसान समये वहन्तश्चैवं चिन्तयेत् ॥ २२ ॥
नौरूपां विततां क्षोणिं प्रजापति गणान्वितम् ।
मुक्ताफलगणैनैव वपुषा निर्मलेनच ॥ २३ ॥
अनिर्मीलितनेत्रस्त मीनात्मा भगवा नथ ।
यो नित्यं भवभीतानां सुधानां कृपया स्वयम् ॥ २४ ॥
हस्तयो निर्यातदण्डेन मार्ताण्डायुतसन्निभः ।
जित्वा ज्ञानबलं भीम मिन्द्रियारिगणान्वितम् ॥ २५ ॥
सर्वेच्छ त्यचिरा द्रुह्म नन्दनं सत्सुताय च ।
ध्याये त्तमेव हस्वांगं श्यामं पद्मदळे क्षणम् ॥ २६ ॥
शान्तिनिविष्टभुवनं जटावलयकाळभूषितम् ।
छत्र तद्वामहस्ते स्य दण्ड मन्यत्र वैष्णवम् ॥ २७ ॥
आक्रम्य जायदादित्य सूर्येन्दुहुतभुग्प्रभाम् ।
तिष्ठन्पनन्तो भगवां स्तुयन्त्य श्चिद्विभूतिभृत् ॥ २८ ॥
रामेरप्य ग्रनिच्छात स्स्वपद्मा दमृतप्रभाम् ।
आरराद्जननी शक्ति कार्मिणां भावितात्मनाम् ॥ २९ ॥
चैलोरयपूरक ध्याये त्तमेव द्दरितद्युतिम् ।
नानामुद्रान्वितेन भुजवृन्देन भूषितम् ॥ १३० ॥

खेटकेनाग्निदण्डेन यद्वत मरिसूदनम् ।
यद्वन्तं सद्वैजयन्तीं देवानां च जयार्थिनाम् ॥ ३१ ॥
खड्गंचक्र[ शब्जखड्ग ] गदादण्ड बाणांकुशसमुद्गराः ।
शक्तिः परशुशैलेन्द्रौ दशदशभुजेष्वपी ॥ ३२ ॥
शंखतोमरशार्ङ्ग च पाशशूलमहीरुहाः ।
कुलिशं क्षुरिका चैव लांगलं मुसलं महत् ॥ ३३ ॥
वामहस्ते, ध्येयास्ते, शब्जमुद्रान्विताद्दशः ।
भयविस्मय मुद्रेणी, कण्ठग्रहण लक्षणाः ॥ ३४॥
ध्येया मुद्रा विभो पंच सव्येतु करपंचके ।
वराख्यां भूतिसंज्ञांच, मुक्ताख्यां साभयान्तवै ॥ ३५ ॥
गोपनीन्द्रक्षहस्तेषु तारसंख्येषु च संस्मरेत ।
जगत्सूत्रं सहा [ भा ] क्षेत्रु येनोक्त ममितात्मनां ॥ ३६ ॥
गुणषट्क स्वरूपेण पूर्वोक्ताकृतिभिर्विना ।
स्मर्तव्य स्वचतुर्धावे लाञ्छनाद्य विवर्जितः ॥ ३७॥
सर्वदापरिरक्षान्तु जयपूर्व चतुष्टयम् ।
योगक्रिया तपोन्तस्य सद्विभूत्यपवर्गदम् ॥ ३८ ॥
नराद्यः कृष्णनिष्ठश्च पृथगे कश्चेच्छया ।
नरन्तत्र मयाळाभ मर्धोन्मीलित लोचनम् ॥ ३९॥
अन्तर्निविष्टभावंच शब्दब्रह्मैकमानसं ।
यत्रोपलक्षणमन्त्रं रूपमानमलक्षितम् ॥ १४० ॥
स्फाटिकेनाक्ष सूत्रेण करस्थेनचशोभितम् ।
गणयन्नक्षसूत्रीया नावर्तान् वामपाणिना ॥ ४१ ॥
अथनारायणन्देवं ध्यायेत कुमुदपाण्डुरम् ।
बद्धब्रह्मांजलिशान्तं हृत्पद्मार्पितमानसं ॥ ४२ ॥
पुरानश्च स्वमात्मानं परस्मिन्नव्ययेपदे ।
कमण्डलुधरंध्यायेत रोचनाभमतोहरि ॥ ४३ ॥

विष्टराविष्टपाणिंच क्रियाकाण्डप्रदर्शकम् ।
पठन्त मनिशं शास्त्रं पंचरात्रपुरस्सरम् ॥ ४४॥
कृष्णमिन्दीवरश्याम मूर्ध्ववाहुं जटाधरं ।
पादेनैकेनतिष्ठन्त माद्दरन्तंच मारुतं ॥ ४५ ॥
एकात्रिषड्ढादिषड्रात्रा यतिकृच्छ्रपरायणम् ।
पक्षमासोपवासांश्च दिशन्त मनुचिन्तयेत् ॥ ४६ ॥
कृष्णाजिनोत्तरीयाश्च सर्वेकाषायधारिणः ।
ब्रह्मलिंगधरास्सर्वे सर्वेब्रह्मपरायणाः ॥ ४७॥
मुख्यकर्म परिक्रान्ता स्साधूनां प्रेरणायच ।
कालानुकाल माश्रित्य सर्वेसर्वपरायणाः ॥ ४८॥
अथंगशनयाभगवान् सत्कुठाराभिधानया ।
छिनत्ति यद्धमूलान् यः कर्मवृक्षांस्तु कर्मिणाम् ॥ ४९॥
तमेव द्विभुजंध्याये दुदयादित्यवर्चसं ।
कृष्णेनचर्मवसनं सत्कुठारकरांकितम् ॥१५०॥
दशेन्द्रियाननंघोरं योमनोरजनीचरम् ।
विवेकशरजालेन शमं नयतियोगिनां ॥ ५१॥
ध्येय स्सएव विश्रामा सतोय जलदप्रभः ।
रक्तराजीवनयनो धनुश्शरकरांकितः ॥ ५२॥
वाग्देव ममलं योधे स्वरूप यतिलक्षणम् ।
स्वयंस्वीयार्थविभजति त्रिधापश्यन्ति पूर्वकम् ॥ ५३॥
बोधमारुतहृत्पूर्व स्थानेष्वभ्युदितंक्रमात् ।
स्मर्तव्य स्सोपिभगवा नतसीकुसुमद्युतिः ॥ ५४॥
यद्गवे वामहस्तेन सर्वशास्त्रार्थ पुस्तकं ।
दक्षिणेनतुशास्त्रार्थं मादिशंश्च यथास्थितम् ॥ ५५॥
युगानुसारिबोधाना मखेद जननायच ।
विभजंस्तु चतुर्धावै वेदमेकं त्रिकालवित् ॥ ५६॥

दानधर्मरतानांच यागयज्ञातु याजिनाम् ।
तपस्स्वाध्याय सक्तानां मुक्तानां वै पुनर्भवात् ॥ ५७॥
संरक्षणाययोग्यत्व विज्ञानव्यक्तये ऽपिच ।
समुदेति जगन्नाथ स्तेषां हृत्कमलावनेः ॥ ५८॥
मनोवाजिन माक्रम्य स्वादायात्म गुणायुतान् ।
नूनमुत्पादयत्याशु जन्मान्तर शतोत्थितम् ॥ ५९॥
वैषयं वासनाजालं नाशयत्यात्म सिद्धये ।
ध्यायेद्वराश्वगन्धंवै तनुत्राद्वृत विग्रहम् ॥१६०॥
सितोष्णीषललाटंच नातिदीर्घजटाधरं ।
द्रवत्कनकवर्णाभ मिषुधि द्वयमध्यगम् ॥ ६१॥
शरचापकरव्यग्रं खड्गकुन्त कुठारिणम् ।
यज्ञाध्ययन दानादि परिरक्षन्तमेवाहि ॥ ६२॥
शातयन्त मवर्णाश्चा स्वधर्मनिरतात्मनः ।
सर्वतत्त्वाश्रयन्तत्त्वं सर्वशक्तिमयंविभुम् ॥ ६३॥
सर्वेन्द्रिय गुणाभासं सर्वेन्द्रिय विवर्जितम् ।
आधारं भुवनानांच ध्यातव्य स्तदधस्स्थितः ॥ ६४॥
अनन्तशयनारूढः कल्पान्तहुतभुक्प्रभुः ।
ज्वलज्ज्वालावलीयुक्तः ज्वलनांशुकवेष्टितः ॥६५॥
चक्रायायुधवृन्देन मूर्तेन परिवारितः ।
स्थितांघ्रिदेशतो लक्ष्मी श्चिन्ता दक्षिणतो विभोः ॥ ६६ ॥
मूर्धदेशगता निद्रा पुष्टि स्तद्वामत स्स्थिता ।
प्रधानदेवताध्यान मिद मुक्तं समासतः ॥ ६७ ॥
यज्ज्ञात्वा विनिवर्तन्ते जन्ममृत्युजरारुजः ।
नाम्नै वंशे ध्वजे येषां व्यक्ति व्यक्ता जगत्त्रये ॥ ६८ ॥
तेपि लांछनवृन्दं तु धारयन्त्यग्निगोचरे ।
ललाटे चांगपट्टे तु पृष्ठे पाणितलद्वये ॥ ६९ ॥

तनूरुहचये मूर्ध्नि कामिनां प्रतिपत्तये ।
अपि संसारिणो जन्तो स्स्वभावा द्वैष्णवस्य च ॥ १७०॥
न जहा त्यच्युतं लिंगं किं पुन र्विभवाकृतेः ।
सर्वेषां कामचारित्वं यदुक्तं वै मया पुरा ॥ ७१ ॥
तदंघ्रिभुजवर्णास्य बृहन्मध्याणुलक्षणम् ।
एकाद्यनेकसंख्यं च दृश्यं सर्वत्र सर्वदा ॥ ७२ ॥
नरवन्यरूपता कार्या कारणं कामरूपताम् ।
यस्मा दस्ति पृथग्भूतो व्यापारो विश्वमन्दिरे ॥ ७३ ॥
देवानां स्थितिसंहार सृष्टिकाले स्वक स्स्वकः ।
सत्येवं नियमे सिद्धे तथापि भगवद्वशात् ॥ ७४ ॥
चातुरात्म्यसमूहात्तु यत्पद्मदळभूस्थितम् ।
तथा विभवदेवाना म्मध्या त्पद्मदळेक्षण ॥ ७५ ॥
एक स्यनुगृहार्थं तु शक्त्यात्मा भावितात्मनाम् ।
बिभर्ति बहुभेदोत्थं रूपं स्वाह्वानस्थितम् ॥ ७६ ॥
यदनुस्मरणा द्ध्याना दर्चना द्चिरा त्पुमान् ।
प्राप्नोति मनसो ऽभीष्टं तन्मे निगदत श्शृणु ॥ ७७ ॥
सत्य स्सुवर्णो गरुड स्तार्क्ष्य श्च विहगेश्वरः ।
पञ्चात्मकस्य प्राणस्य विकार स्त्वेव पंचधा ॥ ७८ ॥
आचांघ्रिगोचरा स्सर्वो यस्य देह स्स्व पीदपः ।
द्विभुज स्सुहिनाभ श्च स सत्यः प्राणदैवतम् ॥ ७९ ॥
सुपर्णः पद्मरागाभो निर्मल स्स्वर्णलोचनः ।
गरुडः कांचनाभ स्तु कुटिलभ्रुरुणेक्षणः ॥ १८० ॥
वैकराक्ष स्तु तार्क्ष्यो वै प्रावृड्जलदसन्निभः ।
द्रवत्कनकनेत्रस्तु शबळाभश्च पंचमः ॥ ८१ ॥
चतुर्भुजा स्सुपर्णाद्या स्सौम्यरूपास्त्वनाकुलाः ।
पतत्रि चरणास्सर्वे पद्ममण्डल मण्डिताः ॥ ८२ ॥

एम्बोदरास्सुपीनाना. कुण्डलाद्यैस्तु भूषिता. ।
तुटिकस्सुवृत्ताक्ष पक्षतुण्डा स्मिताननाः ॥ ८३ ॥
अपानादि समीराणा माधिपत्येन संस्थिता. ।
महाबला महाकाया रक्ततुण्डोऽत्र पञ्चम ॥ ८४ ॥
आधेय चरणाधस्स्थ स्सव्य आद्यस्य वैकर ।
दक्षिणश्चाक्षसूत्रेण सुसितेनच भासित. ॥ ८५ ॥
एवमेवसुपर्णस्य परिशेषभुजद्वय ।
नाभिदेश परोयाम उत्तानरतुलाविस्मय ॥ ८६ ॥
आधेयचरणाधस्थ स्सव्यगाधस्य वैकर ।
पुष्पस्तम्भकसम्पूर्ण ऊर्ध्वकरस्तु दक्षिण. ॥ ८७ ॥
गरुडस्य द्वयविद्धि हृद्देशाञ्जलिकाविणम् ।
तृतीय सम्पुटाकार चतुर्थस्य करद्वय ॥ ८८ ॥
दक्षिणेऽमृतकुम्भस्तु वामतु विषम फणी ।
पञ्चमस्य द्वयशेष तथाणाञ्च द्वयोस्समम् ॥८९ ॥
आधेय चरणाक्रान्तो यदिवै दक्षिण कर ।
सचाराविहितोवामे त्वक्षसूत्रस्य वैतदा ॥१९०॥
आधेयचरणाधस्थ यस्यपाणितलद्वय ।
निरस्तसूत्रन्तविद्धि वाहनभगवन्मय ॥ ९१ ॥
अनुग्रहपरस्त्वास्ते पक्षिपक्षाब्ज निर्झरे ।
स्वतेजो निजसामर्थ्य ससूचक करा[ग्रा]न्वित. ॥ ९२ ॥
पद्मासनादिनाचैव केवलया श्रियान्वित ।
सुप्रस्तावयवस्थित्या विद्धि त गरुडासन ॥ ९३ ॥
मेढ्रभूस्सोदरास्यैव गोपितविगगामिना ।
वीर्यपाता स्स्वशिरसा गच्छतश्चाण्डजेनतु ॥ ९४ ॥
लोकान्तराणा कार्यार्थ वात्सल्याद ध्यायिनामपि ।
प्रत्यक्षदर्शनार्थ तु स्मृतोगरुडवाहन. ॥ ९५ ॥

तस्माद्भगवतोविष्णो रेवंरूपधरस्यतु ।
समाहूतस्य सिद्ध्यर्थ मासीनं संस्मरेत्स्थितिम् ॥ ९६ ॥
उपसंहृतवामांघ्रिः कञ्जस्थोवा खगस्थितः ।
वामामिच्छाफलानांयो ध्वंसयत्यन्यचिन्तितम् ॥ ९७ ॥
आसानो दक्षिणस्यैव मविक्षिप्त स्स्मृतोच्युतः ।
आमोक्षा त्सर्वसिद्धीनां दक्षिणाभ्यायिनां भवेत् ॥ ९८ ॥
सर्वमेव ऋजुस्थित्या संस्थित आर्थिनां स्मृतः ।
स्वस्तिकाद्यै भवत्येव किन्तु ते वाहनं विना ॥ ९९ ॥
विहिताः पीठ कल्हार सिंहासन गतस्यच ।
विहगाधिपविश्वाद्य योगैश्वर्यो द्विभर्तिच ॥ २००॥
सचक्र भुजवृन्दन्तु नागेंद्राख्यवरान्वितम् ।
विभो राज्ञावशेनैव तुष्ट्यर्थ वा स्वयं विभोः ॥ १ ॥
जगज्जयोदयार्थतु शान्तये शरणैषिणाम् ।
विभिन्नेनच रूपेण नाना लोकान्तरेषुच ॥ २ ॥
अनिरुद्ध गति धीरो विचरत्येकरूपवान् ।
तदारूढस्य यद्रूपं शक्तीशस्यच सम्प्रति ॥ ३ ॥
अनेक भेदभिन्नन्तु निबोध गदतो मम ।
संवहन्तं सदाशान्ति भाविनां दक्षिणेनतु ॥ ४ ॥
प्रोद्वहन्तं च वामेन शांतं पूर्वोक्तलक्षणम् ।
द्विभुजस्य शिवं रूपं शक्तीशस्यतु केवलम् ॥ ५ ॥
रूपेणानेन च पुन स्त्वोहासमुपयान्तिच ।
सह कान्तागणे नैव त्वेकाचेन पृथक्पृथक् ॥ ६ ॥
माघ लक्ष्म्या समेतं च सदेकं रूप मैश्वरम् ।
श्रीपुष्ट्यो रम्यमप्यर्थ द्वितीय परिकीर्तितम् ॥ ७ ॥
श्रियादि माया निष्ठेन चतुष्केण वृतं परम् ।
शुद्ध्यादिकेन षट्केण चतुर्थ विद्धि साम्प्रतम् ॥ ८ ॥

पुष्टयन्तेन श्रियाद्येन त्वष्टकेनतु पंचमम् ।
लक्ष्म्याद्येन द्विषट्केण षष्ठं विद्धि समन्वितम् ॥ ९ ॥
श्रीदेवी कीर्तिदेवीच जयादेवी हलायुध ।
चतुर्थी भगवन्माया विश्वस्यास्य निवन्धनी ॥२१० ॥
शुद्धि निरञ्जना नित्या ज्ञान मुक्ति [ स्थैर्य ] पराजिते ,
प्रकृति स्सुन्दरी षट्क मित्युक्तं सर्वसिद्धिदम् ॥ ११ ॥
लक्ष्मीश्शब्दनिधिस्सर्वं कामदा प्रीतिवर्धनी ।
यशस्करी शान्तिदाच तुष्टिदा पुष्टिदाष्टकम् ॥ १२ ॥
द्विषट्कं वैभवे योगे देवीनां कीर्तिदंहि यत् ।
लक्ष्म्याद्यं तच्च बोद्धव्यं भेदेऽस्मिन् पारमेश्वरे ॥ १३ ॥
पुनश्चतुर्भुजस्यैवं विज्ञेयं भेदसप्तकम् ।
किन्तु वै शंखचक्रे द्वे वामहस्ते द्वयेन तु ॥ १४ ॥
जग त्यस्मिन् हि यच्छन्तं शान्ति माद्येन शाश्वतीम् ।
प्रोद्वहन्तं द्वितीयेन त्वपसव्येन वै गदाम् ॥१५॥
भूयःकरचतुष्केण पूर्वोक्तेन क्रमेण तु ।
चतुर्णां मञ्जपूर्वाणा मन्योन्यार्थेन धारणात ॥ १६ ॥
धत्ते द्वादशधा रूपं निश्शक्तिकं च केवलम् ।
पुन र्द्वादशकं तच्च सह शक्तिद्वयेन तु ॥ १७ ॥
स्थित मेकाधिकेनैव षोढा कमललोचन ।
एवं चतुर्भुजेनैव वपुषा बहुधा स्थितः ॥ १८ ॥
सप्तधा षड्भुजाद्येन भुजाधिक्येन वै पुनः ।
स्थित स्त्वनेकधा देवो यथा तदवधारय ॥ १९ ॥
षड्बाहु रष्टबाहु श्च दशद्वादशबाहुधृत् ।
द्विसप्त षोडशकर स्तथाष्टादशभूषितः ॥ २२० ॥
केवलादिश्च सर्वेषां प्राग्वद्भेदस्तु सप्तधा ।
तन्मेशृणु यथावस्थ मस्त्रविन्यास चिह्नितम् ॥ २१ ॥

# अथ त्रयोदशः परिच्छेदः ।

भगवान् ।

योगेस्मिन् स्वेनपीठेवै सर्वसामान्यलक्षणे ।
ध्येयाविशेषरूपेण किरीटाद्याखिलास्तुवै ॥ १ ॥
चतुर्भुजाश्चतुर्वक्त्रा वस्त्रस्रग्भूषणान्विताः ।
पुनर्विशेषयोगाना मर्चनावसरेपुनः ॥ २ ॥
पद्माननंचसर्वेषां द्विभुजं विहितंसदा ।
किरीटस्सौम्यवदनः कांचनाभोमहातनुः ॥३॥
भाभिराकृतियुक्ताभि र्नानारूपाभिरावृतः ।
स्थितोवैद्यावर्दायेन स्थानाकेनान्तरिक्षगः ॥ ४ ॥
पद्मरागाचलाकारं कौस्तुभं रत्ननायकम् ।
दिशोदशाद्योतयन्तं वक्षस्थे स्थितंस्मरेत् ॥ ५ ॥
वहन्तंवक्षसोमध्ये स्वहस्तकृतसम्पुटम् ।
सन्धारयन्तमपरं तथावैशिरसोपरि ॥ ६ ॥
स्फटिकाद्रिप्रतीकाशं श्रीवत्समथभावयेत् ।
वद्धपद्मासनासीनं न्यस्तहस्तंस्वपार्श्वयोः ॥ ७ ॥
वहन्तंकूर्ममुद्रांच मुख्यहस्तद्वयेनतु ।
ध्येयाभगवतीमाला चित्ररूपामनोहरा ॥ ८ ॥
सर्वगन्धान्वितासौम्या ईषद्विकसिताननाः ।
स्वरश्मिमण्डलान्तस्स्थं वलगन्तं इतिपंस्मरेत् ॥ ९ ॥
विभोराक्षंप्रतीक्षन्तं हस्वाङ्गं रक्तलोचनम् ।
कुन्दा [ न्ता ] वदात कमलं सौम्यमीष स्मिताननम् ॥१०॥
रवं सुदन्तं मधुरं श्रोत्रेन्द्रिय सुखावहम् ।
गदांहेमाद्रिसंकाशां तन्वीं कुवलयेक्षणाम् ॥११॥

स्वोत्थेनरश्मिजालेन भावसर्न्वा नभस्स्थलम् ।
तुहिनाचलसंकाशं शंखं कमललोचनम् ॥१२॥
सदागमादिसारन्त मुद्गिरन्तं स्वकैर्मुखैः ।
सन्ध्याजलदसंकाशं लांगलंभीमलोचनम् ॥१३॥
क्षौ [ क्षा ] मांग सुव्रतांसंच वज्रकायं वलोत्कटम् ।
कृशोदरंच मुसलं रश्मिज्वालावलीवृतम् ॥१४॥
अंगारराशिसदृशं प्रलम्बमतिनिष्ठुरम् ।
नीलोत्पल दलश्याम मिम्बस्थं बहु [ बाल ] विग्रहम् ॥१५॥
नानारूपंचनिशितं दीर्घदृक्चण्डविक्रमम् ।
कार्मुकंहेमगौरंच किंकिणीजालमण्डितम् ॥१६॥
आस्फोटयन्तंस्वकरं महाजलदनिस्वनम् ।
स्वरश्मिखचितंध्याये न्नृत्यमानंच नन्दकम् ॥ १७ ॥
शारदाकाश संकाशं दशान्तंदशनावलिं ।
सूर्यमण्डलसंकाशं खेटकं सौम्यमूर्तिकम् ॥१८॥
प्रसन्तमस्त्रपूगानि स्ववक्त्रेणा निशाम्बलात् ।
बद्धमुष्टिस्मरेद्दण्डं रक्तांगं रक्तलोचनम् ॥१९॥
क्रोधमूर्तिं स्वदशनै र्दशन्तमधरंस्वकम् ।
शक्रकार्मुकवर्णंच परशुंभीमविक्रमम् ॥२०॥
प्रभाकनकनेत्रंच ज्वलज्ज्वालाजटाधरम् ।
पाशंफणगणाकीर्णं विद्युज्जिह्वं भयानकम् ॥ २१ ॥
हेमालिपाण्डराभंच घोरास्यंरक्तलोचनम् ।
कृशांगंदीर्घबाहुंच पिंगलाक्षन्तुचांकुशं ॥ २२ ॥
विकरालमुखंरौद्रं भिन्नाञ्जनगिरिप्रभम् ।
मुद्गरंशतधामाभं पीनांसं पृथुविग्रहम् ॥ २३ ॥
जटाकलाप धृक्सौम्यं पुण्डरीकनिभेक्षणम् ।
वज्रंवज्रोपलाभन्तु सितदीर्घं नखान्तिकम् ॥ २४ ॥

षड्भुजो दक्षिणैर्धत्ते त्रिशिखं कमलं गदाम् ।
सशरं कार्मुकं शङ्खं वामैरस्त्रोत्तमन्त्रिभिः ॥ २२ ॥
गदा मुसलचक्राख्या नष्टबाहुस्तु दक्षिणैः ।
शंखमंकुश पाशौच वामैस्तु सशरंधनुः ॥२३॥
खड्गबाण गदापद्म शक्तियुक्तास्तु दक्षिणाः ।
दशबाहोर्धनुश्शंख चक्रखड्गाश्च साभयाः ॥ २४ ॥
षण्णांदक्षिण हस्तानां द्विषट्क भुजभूषितः ।
सन्धत्ते कमलं खड्गचक्रबाणगदांकुशान् ॥२५॥
शंखपाशाभयान्शक्ति सव्यानाम्मुसलंधनुः ।
चतुर्दशभुजोधत्ते वामेतुभुजसप्तके ॥२६॥
शंखंगदांकुशौपाशं मुसलंमुद्गरंहलं ।
दण्डाब्जकुलिशान्चक्रं खड्गशक्तिपरश्वधान् ॥२७॥
बिभृयात्षोटशभुजो मुख्यहस्तैस्समुद्गरान् ।
अभयंकमलंखड्गं शक्तिदण्डवरांकुशान् ॥२८ ॥
शंखचक्रगदावज्र पाशलांगलकार्मुकान् ।
वरंकराष्टकेनैव धत्तेसव्येनविश्वजित् ॥ २९ ॥
पद्मखड्ग गदावज्र चक्रबाण वरांकुशान् ।
दण्डंदक्षिणहस्तैस्तु धत्तेऽष्टादशबाहुधृत् ॥२३०॥
शंखाभयौहलंशक्ति मुद्गरंमुसलं धनुः ।
कुठारमतुलंपाशं बिभुर्वामभुजैरमून् ॥ ३१ ॥
बिभर्तिदुष्टशांत्यर्थं साधूनांपालनायच ।
भूयांसिशेषरूपाणि त्वेतान्येवविशेषतः ॥३२॥
स्ववक्त्रद्वयमात्रेण नयत्यमितविक्रमः ।
सिद्दतेजोसहिष्णूनां पितृयानरतात्मनां ॥३३॥
अंगनादिकसंसार भीतानांविहितायच ।
अमृतंवैग्रहैभांगे स्तैजसेनित्यदक्षिणे ॥३४॥

वामदक्षिणवक्त्राभ्यां कुर्याद्विव्यायथमंभुः ।
हृद्येपिच शांत्यर्थं तेजसःपद्मलोचन ॥३५॥
हेतुनानेनभगवान् वहिरंतर्गतेनवै ।
अग्नीषोमौसमीकृत्य स्वास्तेसाधारणात्मनां ॥ ३६॥
स्वांकिवागीशवक्त्रन्तु नीतवैवंशिरसोपरि ।
पंचवक्त्रेणवपुषा स्वामूलाद्यात्यनेकधा ॥ ३७॥
शब्दमंत्ररत्नानांच ध्यायिनामात्मसिद्धये ।
आपातालाच्चसर्वेषां लोकानांपूरणायच ॥३८॥
नानावपुर्धरोभूय सत्वधिकेनैवयातिच ।
भेदनरूपमाश्रित्य दशधाचसितादिकं ॥३९॥
विनायकैर्नृसिंहाद्यै स्सर्वज्ञमहिमान्वितः ।
बिभर्तिरूपाण्येतानि स्वनिरुद्धस्सुताक्ष्यकं ॥४०॥
एवमाक्रम्यगरुडं प्रद्युम्नोविभुर्यात्तनुः ।
नानात्वमभिचारयेति संकर्षण सुपर्णगः ॥४१॥
देवस्सर्वोपरिस्थितश्च विश्वात्मा यात्यनेकधा ।
सुरसिद्ध मनुष्यादि भूतानां दुःखशान्तये ॥ ४२ ॥
चतुर्णायो निजाख्यणां स्तेतुमूर्त्यंतरेषु च ।
चतुर्भुजस्यादि मूर्ते विष्णो मूर्त्यंतरस्यच ॥ ४३ ॥
वर्णलांछन तुल्यत्वे भेदकृत्सध्वजद्वयम् ।
अपसव्यस्थितेनैव तत्ताळाख्य ध्वजेनतु ॥ ४४ ॥
स्वरूपमिदमाप्नोति स्वमूर्ति स्सद्दसर्वदा ।
यस्मात्कार्यवशेनैव मूर्तीनामपि पाणिगाः ॥ ४५ ॥
चतुः पद्मादयोमूर्ता मूर्तांश्शान्ता स्तथोद्यताः ॥ २४५॥

इति श्रीपाञ्चरात्रे श्रीसात्त्वतसंहितायाम्
विभवदेवताध्यान नाम
द्वादशः परिच्छेदः ॥ १२ ॥

दंष्ट्राकराळवदनं ज्वलत्कनकलोचनम् ।
सौदामिनीप्रभाशक्ति शान्ताग्निवदनेक्षणम् ॥ २५ ॥
घनघर्घरनिर्घोष मुद्गिरन्तीम्मुहुर्मुहुः ।
एते ऽ त्र नायकास्सर्वे विभोराज्ञाप्रतीक्षकाः ॥ २६ ॥
प्रोथितावचलंतश्च कुसुमैस्स्थानके[सुसंस्थैर्यानके] स्थिताः ।
श्रोणीतटार्पितकराः श्रामरव्यजनोद्यताः ॥ २७ ॥
सपद्मन्तु किरीटाग्रं सर्जयित्वाचतुष्टयम् ।
तर्जयन्तंच दुष्टौघ मन्येषां दक्षिणंकरं ॥ २८ ॥
स्मर्तव्यं ध्यानकालेतु सर्वेषामधमस्तके ।
ध्येयंस्वकंस्वकंचिह्नं सुप्रसिद्धं निराकृति ॥ २९ ॥
किरीटोहुतभुग्वेद्यः कौस्तुभस्तुप्रभाकरः ।
स्वयंशशांकः श्रीवत्सो माळाचैवपतत्रिराट् ॥ ३० ॥
कालश्चैषमहाबुद्धे विद्धिचक्रन्तु हेतिपं ।
अपाम्पतिर्वैकमलं गदादेवीसरस्वती ॥ ३१ ॥
खंशंखस्सीरमीयष्यो मुसलं ना [न] गनायकः ।
शब्दादयस्साधकास्तु धनुर्विद्धिसमीरणम् ॥ ३२ ॥
नन्दकं सर्वशास्त्राणि खेटक मनुधास्मृता ।
ज्ञेयोहि दण्डो नियति वैराग्यं परशुस्स्मृतः ॥ ३३ ॥
पाशोमायांकुशःकामो ह्यहंकारस्तु मुद्गरः ।
विज्ञानममलं वज्रं समाधि श्शक्तिरुच्यते ॥ ३४ ॥
भिन्नरूपस्यचविभो येउक्त स्सुन्दरीगणः ।
साधारश्चाप्यना [धा] धार स्तासां ध्यानं क्रमाच्छृणु ॥३५॥
चिन्ताखण्डलचापाभा लक्ष्मीरक्ताम्बुजप्रभा ।
पुष्टिः कनकगौराच कीर्तिः कुमुदपाण्डुरा ॥ ३६ ॥
जयार्ककान्तिसदृशी माया ञ्जननिभास्मृता ।
शुद्धिः किंशुकसंकाशा गुञ्जाभातु निरञ्जना ॥ ३७ ॥

बन्धुजीवोज्वलानित्या।ज्ञानशक्ति स्सितारुणा ।
फुल्लेंदीवर वर्णाच परिज्ञेया पराजिता ॥ ३८ ॥
रक्तोत्पलाभा प्रकृति स्सितपीता सरस्वती ।
सर्वकामप्रदां विद्धि स्विन्द्रनील समप्रभाम् ॥ ३९ ॥
सिन्दूर पुञ्जवर्णाभा विज्ञेयाप्रीतिवर्धनी ।
यशस्करीच दुग्धाभा शान्तिदा विद्रुमोज्वला ॥ ४० ॥
पुष्टिस्तुहिनसंकाशा दयावैडूर्यसन्निभा ।
निद्रायस्कान्तसदृशी क्षमापीतारुणप्रभा ॥ ४१ ॥
कान्तिर्दर्पणसंकाशा धृतिर्गोरोचनोज्वला ।
मैत्रीबन्धूकपुष्पाभा रतिर्गैरिकसन्निभा ॥ ४२ ॥
प्रतिर्मरकताभावै सर्वाःप्रमुदिताननाः ।
दिव्यमाल्याम्बरधरा नानालंकारभूषिताः ॥ ४३ ॥
दिव्यस्रग्वेष्टनोपेता वीक्षमाणास्स्वक पतिम् ।
चतस्रश्शक्तयोयास्तु विभोश्शयनकस्यतु ॥ ४४ ॥
प्रयुक्तास्तत्रपूर्वाशा वस्थितावीजपत्यजम् ।
प्रयंयदिक्रयस्यन्तु तत्संवाहनतत्परम् ॥ ४५ ॥
यत्रैकाश्रीर्विभोस्तत्र सन्निवेशपरोदिता ।
यत्रैकाश्रीर्विभोस्तत्र वामेवादक्षिणेपिवा ॥ ४६ ॥
श्रीपुष्टयाख्यद्वयंयत्र तत्रतद्दक्षिणोत्तरे ।
पद्मासनेनोपविष्टा पक्षिपक्षद्वयेस्थिता ॥ ४७ ॥
*नलिनीनालहस्ताढ्या मृदुकुंभकरापरा ।*
अग्नीषोममयोदेह आद्योयस्सर्वगस्यच ॥ ४८ ॥
तस्यशक्तिद्वयंताद्द गमिश्रं भिन्नलक्षणम् ।
भोक्तृशक्तिस्स्मृतालक्ष्मीः पुष्टिर्वैकर्तृसञ्ज्ञिता ॥ ४९ ॥
भोगार्थमवतीर्णस्य तस्यलोकानुकम्पया ।
उदितसदृशेनैव शक्तिद्वितयमव्ययम् ॥ ५० ॥

मानात्वेनद्वियेयस्य परिणामः प्रकीर्तितः ।
दिक्पत्रचतुरन्तस्थं यद्वेदेविचमुष्टयम् ॥ ५१ ॥
शक्तिः परशु पाशास्त्र मंकुशं तत्करेष्क्रमात् ।
षट्कंकेसरजालस्थं तत्रमास्पश्चिमेद्वयम् ॥ ५२ ॥
द्वयं द्वयं सौम्ययाम्ये तासां वाम करेषु च ।
शंखं चक्रं गदा सीर मिष्वस्त्रं नन्दकं शितम् ॥ ५३ ॥
पत्रमध्येनिविष्टन्तु यत्कान्ताष्टक मुत्तमम् ।
तस्यवामकराणाञ्च विज्ञेयन्तवादितोऽष्टकम् ॥ ५४ ॥
श्रीफलंचाक्षसूत्रंच ग्दर्पणः पुष्पमंजरी ।
विष्टरं किंकिणीचास्त्र संचयःकमलेक्षण ॥ ५५ ॥
विज्ञेयश्शान्तिद.पाणि र्द्वादशानान्तुसाभयः ।
अन्तरान्तरयोगेन सर्वाश्चामरलांछिताः ॥ ५६ ॥
स्वस्तिकेनोपविष्टाश्चा प्यन्तर्मुदितमानसाः ।
द्व्यादिकस्यास्यसंघस्य द्वादशान्तस्यकाङ्क्षिन् ॥ ५७ ॥
सितादिकेनवर्णेन लांछनव्यत्ययेनतु ।
तुल्यलाञ्छनयोगेन तन्निरासेचवैसति ॥ ५८ ॥
वराभयाभ्यामन्योन्य पाणिभ्यामथकेवलात् ।
बहुधाभेदवृन्दन्तु परिज्ञेयन्तुपूर्ववत ॥ ५९ ॥
शेषंभवोपकरणं देवानां निचयोदितः ।
सुप्रसिद्धोमहाबुद्धे किन्तवञ्जायैस्तु पूर्ववत् ॥ ६० ॥
ध्यातव्यालांछितास्सर्वे पाणिपादतलेषुच ।
भक्तिश्रद्धाव्रतपर स्सर्वेषां वस्सदैवहि ॥ ६१ ॥
ध्यात्वैवमर्चनंकुर्यात भोगैस्संस्पर्शपूर्वकैः ।
सोचिरान्मोक्षनिष्ठन्तु फलंप्राप्नोत्यभीप्सितं ॥ ६२ ॥
किरीटाद्यत्रनिष्ठेन परिवारेण चावृतम् ।
भक्त्या ह्यभीप्सित रूप मर्चनीय मथापि वा ॥ ६३ ॥

निर्मुक्तपरिवारं वा स्वेन ध्यानेन लक्षितम् ।
विदधात्यर्चना नूनं स्वपदं फलसंयुतम् ॥ ६४ ॥
ज्ञात्वैवं साधकः कुर्या यथाभिमत मर्चनम् ।
आत्मशक्तिसमे भोगे रक्षिलै शुद्धविग्रहैः ॥ ६५ ॥
हृदिवेद्यां बहिर्मूर्तौ प्रासादेस्वगृहेतुवा ।
बहुप्राकारनिर्मुक्ते धूमदाहादिनोज्झिते ॥६६॥
शरणेरमणीयेच निरस्तम्पर्केतु भाविते ॥६७॥

इति श्रीपाञ्चरात्रे श्रीसात्वतसंहितायाम्
भूषणाचक्र देवताध्यानं नाम
त्रयोदशः परिच्छेदः ॥ १३ ॥




---

## अथ चतुर्दशः परिच्छेदः ।

---

भगवान् ।

अखण्डनायनित्यस्य तथानैमित्तिकस्यच ।
कर्मणश्चोदयामास हलीविष्णुं मुनीश्वराः ॥ १ ॥
यैराजीवावधिकालं नित्यमाराधनंप्रति ।
धीःकृतापुण्डरीकाक्ष श्रद्धापूतेनचेतसा ॥२॥
तेषामाकस्मिकाल्लोपा द्भोगानामप्यसंभवात् ।
यत्स्यात्तस्योपशमनं ज्ञातुमिच्छामि साम्प्रतम् ॥ ३ ॥

भगवान् ।

लोभबुद्धिं विनायस्य भोगाना मप्यसम्भवः ।
सामर्थ्येनविनायस्य कृच्छ्रादीनां परिच्युतिः ॥४॥

आह्लादायामराणांच पितॄणां तृप्तयेतुवै ।
आप्यायानार्थं भूतानां भुवनानांचभूतये ॥ ४ ॥
देशदोषप्रशान्त्यर्थं गोब्राह्मणहिताय च ।
बहुशाखमभग्नाग्रं समूलंयदपुष्पितम् ॥ ५ ॥
प्राङ्मुखोदर्भमादाय प्रणवेनपुराक्षितैः ।
ततस्तेनैवतन्मूलं प्राग्वत्कुर्यादधिष्ठितम् ॥ ६ ॥
तस्यमध्यमनालंय त्र्यचभूतमवतिष्ठते ।
आराध्यमन्त्रनाथेन स्मरेद्व्याप्यमहात्मना ॥ ७ ॥
विवर्तपारमात्मीय मध्यक्षंचापिविद्धितम् ।
अनेकगर्भमुख्यं त्काण्डंकाण्डेपुचोत्तमम् ॥ ८ ॥
अणिमादिगुणैर्युक्तं पुंस्कारवं तेनकल्प्यते ।
वाचकस्तस्यपोक्तव्यं हंसप्रुक्सन्द्विलक्षणम् ॥ ९ ॥
बहिःकाण्डचतुष्केण चित्तपूर्वचतुष्टयम् ।
कथ [ ग्रन्थ ] नीयमधोवक्त्र मव्यक्तान्तस्वकैः पदैः ॥ १० ॥
प्रणवादिनमोऽ तैस्तु व्यापकंसूक्ष्मलक्षणम् ।
एवंश्रोत्रादिकान्पंच स्वनाम्नाग्रथ [ न्थ ] येत्तथा ॥ ११ ॥
कर्मेन्द्रियाणि तद्वत्तु ततस्तन्मात्रपंचकम् ।
पंचकन्तथभूतानां बध्वावेक्ष्मावसानिकम् ॥ १२ ॥
अवशिष्टैस्तु तत्काण्डे र्बध्नीयात्त तद [ त्कर ] ण्डवत् ।
विनाशिखासमूहेन समुत्तानावधेरथ ॥ १३ ॥
किंचित्तदूर्ध्वदेशाच्च यथानोयातिवैगुनः ।
बहुधाकाण्डसंघस्तु कल्पितस्तत्वसंख्यया ॥ १४ ॥
विभिन्नानां च काण्डानां भंगादिकतमस्यच ।
उत्पद्यते ऽन्यधात्वंच तस्मात्तद्ग्रथयेद्दृढम् ॥ १५ ॥
दर्भमत्रजिन्त्वेवं सम्पाद्यादौपवित्रकम् ।
अनुसन्धीयततत्र मन्त्रध्यानं यथास्थितम् ॥ १६ ॥

पूजयित्वार्घ्यपुष्पाद्यै रलंकृत्यपठेदिदम् ।
त्वमेवतीर्थभगवं स्त्वमेवायतनंपरम् ॥ १७ ॥
त्वय्येवाधिष्ठितंसर्व मितिजानामितत्वतः ।
तत्रापिचत्वयादिष्टं क्रियाकाण्ड शुभमदम् ॥ १८ ॥
यत्तन्निर्वाहया म्यद्य त्वदनुग्रहकाम्यया ।
विज्ञाप्य एवं भगवान् मन्त्रमूर्तिः परावरः ॥ १९ ॥
तं पत्रपात्रगं कृत्वा ह्यश्वयानगतन्तु वा ।
वेदगेयध्वनीशंख शब्दमङ्गळपूर्वकम् ॥ २० ॥
नीत्वा तीर्थान्तिकं तत्र तीरदेशे निधाय च ।
पूर्वामुखं च तं यान मथादाय पवित्रकम् ॥ २१ ॥
वामहस्ते तले कुर्या त्कमामण्डलगतन्तिव ।
निधाय मध्यभागाच्च पाणिना दक्षिणेन तु ॥ २२ ॥
अवतीर्याम्भसो मध्ये निमज्जे त्सह तेन वै ।
सन्निधि तत्र तत्काल प्रकुर्वन्त्यचिरात्तु वै ॥ २३ ॥
निश्शेषाणि च तीर्थानि लोकत्रयगतानि च ।
मन्त्रात्मा यत्र रक्षार्थं क्षण मास्ते जलाशये ॥ २४ ॥
तत्रायतनतीर्थानां सर्वेषां स्या त्समागतिः ।
किं पुन र्यत्र भगवान् मन्त्रमूर्ति रधोक्षजः ॥ २५ ॥
साधकाभ्यर्थित स्स्नाया त्सर्वानुग्रहया धिया ।
विद्वान्योनेन विधिना तीर्थं मासाद्य तत्ववित् ॥ २६ ॥
स्नापये द्बन्धुमित्रादीन् प्राप्नुवन्त्यचिरा च्च ते ।
तैर्थं फलमनायासा न्मन्त्रमूर्तेः प्रसादतः ॥ २७ ॥
किन्तु वाद्यानवादित्र वर्जितस्तु भवे द्विधिः ।
इमं विद्धि महाबुद्धे विशेष च्चात्र कर्मणि ॥ २८ ॥
सामान्य मविनाशं य च्चिन्मयं रूप मैश्वरम् ।
विशेषसंज्ञासम्बन्धं जीवदंशं विभाव्यताम् ॥ २९ ॥

पवित्रकं तथाकारं स्मृत्वा स्नाप्य ततोऽब्जजा ।
एवं तेनैव चान्येषां बहूनां बहुभि स्तु वा ॥ ३० ॥
सम्पाद्यं विष्टरैः स्नानं दूरस्थानां सदैव हि ।
सम्पन्ने स्नपने त्वेवं द्वितीये ऽ ह्नि महामते ॥ ३१ ॥
रथे कृत्वा चिते तं वै प्रपूज्य च यथाविधि ।
यात्राख्य मुत्सवं कुर्यां दत्तदानपुरस्सरम् ॥ ३२ ॥
सनृत्तगेयवादित्रं जागरेण समन्वितम् ।
एकरात्रं द्विरात्रं वा त्रिरात्रं भक्तिपूर्वकम् ॥ ३३ ॥
सकृ त्संवत्सरस्यान्ते पुत्सवस्नपनादिकम् ।
कुर्यां योमन्त्रनाथस्य स सिद्धि लभते पराम् ॥ ३४ ॥

इति श्रीपाञ्चरात्रे श्रीसात्वतसंहितायाम्
पवित्रस्नानविधि नाम

पंचदशः परिच्छेदः ॥ १५ ॥

---

## अथ षोडशः परिच्छेदः ।

---

नारदः ।

प्रभुर्मुनीश्वराभूय श्चोदितोवनमालिना ।
सर्वलोकहितार्थन्तु यत्तद्वक्ष्याम्यतःपरम् ॥ १ ॥

सङ्कर्षणः ।

देवसम्प्रतिपन्नाये क्रमेस्मिन्ब्राह्मणादयः ।
दीक्षणीयाःकथन्तेवा एतदिच्छामिवेदितुम् ॥ २ ॥

भगवान् ।

यथाक्रमेणोदितानां वर्णानांशृणुलांगलिन् ।
त्रिविधंदीक्षणोपायं संक्षेपात्सर्वसिद्धितम् ॥ ३ ॥
पूर्वोक्तलक्षणोज्ञात्वा कश्चिद्दृढतरम्पुमान् ।
संसारभयभीतस्तु निर्वाणमभिवांछति ॥ ४ ॥
वैराग्यधी स्त्वपल श्चिरकालंगुरोर्गृहे ।
संस्थितोदासभावेन खेदोद्वेग विवर्जितः ॥ ५ ॥
ज्ञात्वातस्यार्थितांनून माहूयाग्रेनिवेश्यच ।
कृताकृतंच पृष्टव्य आस्मृतेस्तत्क्षणावधि ॥ ६ ॥
ज्ञात्वादोषबलंतस्य क्रमाश्चिसैर्यथोदितैः ।
कृच्छ्रातिकृच्छ्रपूर्वैस्तु शोधनीयं प्रयत्नतः ॥ ७ ॥
बहूनांपरिपीडाना मसामर्थ्यांतुलांगलिन् ।
मनःप्रसादपर्यन्तं कालंवा द्वादशाह्निकम् ॥ ८ ॥
नियोक्तव्योमितपूते ऽ याचितेनक्तभोजने ।
स्तुतिसम्मार्जनस्नान पुष्पाद्याहरणोद्यमैः ॥ ९ ॥
आश्रमेवैष्णवानान्तु दिव्योचायतनेविभोः ।
अनिशम्भगविद्बिम्ब स्यापीठादवलोकने ॥ १० ॥
अभिजाततनुर्यःप्रा ग्दुष्कृतै र्मलिनीकृतः ।
साम्प्रतंभगवद्भक्तया पवित्रीकृतमानसः ॥ ११ ॥
अहोरात्रोषितोभूत्वा नखकेशादि लुण्ठि [ञ्छि] तः ।
पंचगव्यमधापार्थं हृद्याद्यैस्सकुशोदकम् ॥ १२ ॥
मन्त्रैस्सद्वासुदेवाद्यै स्समावार्यचतुश्शतम् ।
एतंदिनचतुष्कन्तु स्नापयेत्तेन तंसुधीः ॥ १३ ॥
प्रत्यहंचतुरोवारा नाप्रभातनिशागमत् ।
प्रह्मतीर्थं चतुष्कंस त्वापूर्यांपूर्वसम्पिबेत् ॥ १४ ॥
क्रमात्संचोदितैर्मन्त्रै स्समाचम्यान्तरान्तरा ।
अतृप्तमशनंकुर्या दन्तेक्षाराज्यभावितम् ॥ १५ ॥

क्षपयेत्फलमूलैर्वा अहोरात्रचतुष्टयम् ।
इतिभक्त्याप्रपन्नाना मार्जावमपि दुष्कृताद [ निष्कृतिः ] ॥ १६ ॥
कथितांविरतानांच देहशुद्धिकरम्परम् ।
ब्रह्मकूर्चसमेतन्तु प्रायश्चितं मयाद्यते ॥१७॥
ज्ञात्वामहत्त्वं दोषाणां त्रिविधानान्तुवैपुरा ।
सम्भयेसतिहेमादि दानंसततमाचरेद ॥ १८ ॥
पूर्वोक्ताद्विहिताकाला लघुदुष्कृतिनाक्रमात् ।
चतुर्थांशेन ह्रासस्तु ब्रह्मकूर्चं पिबेत्ततः ॥१९॥
कालेनवर्णोत्कर्षेण सहस्रामान्यमुच्यते ।
प्रायश्चित्तंहिसर्वेषां सर्वकल्मषनाशनम् ॥२०॥
उत्तरोत्तरताम्बुध्वा प्रथमंदुष्कृतस्यच ।
क्षपयेत्तद्विजेन्द्रस्तु मासैर्द्वित्रिचतुर्गुणैः ॥ २१ ॥
नृपविट्शूद्रजातीय एकैकंवर्धयेत्क्रमात ।
मासमेकादिकाकाला त्समारभ्ययथाक्रमम् ॥ २२ ॥
दुराचारोपिसर्वाशी कृतघ्नोनास्तिकः पुरा ।
समाश्रये दादिदेवं श्रद्धया शरणंयदि ॥ २३ ॥
निर्दोषं विद्धितंजन्तुं प्रभावात्परमात्मनः ।
किम्पुनुर्योनुतापार्त श्शासनेऽस्मिन्हिसंस्थितः ॥ २४ ॥
विरतो दुष्कृताच्चैव भक्तिच्छायां समाश्रितः ।
एवंसंशुद्धदोषाणां बहुजन्मार्जितस्यच ॥२५॥
कल्मषस्यविघातार्थं नारसिंहीं महामते ।
कृत्वावैसांप्रतं दीक्षां दद्याद्विमंत्रपूर्वकम् ॥ २६ ॥
आराधनंहि तस्यैव वैभवीयस्यवैविभोः ।
सवाह्याभ्यन्तरंचैव सम्यङ्मासचतुष्टयम् ॥२७॥
मासाष्टकं वत्सरंवा बुध्वा भावबलम्पुरा ।
ज्ञात्वाभ्याशयानांच प्रसादम्पारमेश्वरम् ॥ २८ ॥

विभवव्यूहसूक्ष्माख्यां दीक्षांकुर्यादनन्तरम् ।

संकर्षणः ।

परिज्ञेयोहिकौलिंगे स्साधकानामघक्षयात् ॥ २९ ॥
सम्यगाराधनान्मन्त्र प्रसादःकमलापते ।

भगवान् ।

चित्तप्रसादस्सवतुल स्तेजोवृद्धिरतीवहि ॥ ३० ॥
धैर्यमुत्साहसन्तोषा वक्रार्पण्यादयोगुणाः ।
येषां तेषां हि बोद्धव्यं मन्त्रात्माभिमुख स्थितः ॥ ३१ ॥
प्रयुक्ति श्शान्तिकादीनां कर्मणा मचिरादपि ।
प्रयाति यदि साफल्यं विज्ञेयं तेन हेतुना ॥ ३२ ॥
सम्पन्नः पापदाहश्च प्रसन्नश्चापि मन्त्रराट् ।
ददाति धर्मकामार्थो नचिरा यदि योजितः ॥ ३३ ॥
अणिमाद्यष्टकं चापि विविधा योगसिद्धयः ।
आत्मसिद्धिसमेताश्च परितुष्टा स्तदा स्मृताः ॥ ३४ ॥
यस्मिन्वै वैभवे रूपे यस्याभिरमते मनः ।
तस्य कल्मषशान्त्यर्थं दीक्षां कुर्या त्त तेन वै ॥ ३५ ॥
तमाराध्यहिपूर्वोक्त कालं तमनुयोज्य च ।
योग्यतायाः परीक्षार्थं मात्रान्ते स्सर्ववस्तुषु ॥ ३६ ॥
नारसिंहेन चान्येन मन्त्रेणा,भिमतेन च ।
दीक्षया ऽऽराधनेनैव होमजापव्रतादिना ॥ ३७ ॥
कर्मणा केवलेनैव शान्तिकाद्युच्छ्रितेन च ।
विनाणिमादिसिद्धिभ्यो बुध्वा पापं क्षयं गतम् ॥ ३८ ॥
भावये तेन कालेन ततः पद्मदलेक्षण ।
सिद्धानां वैभवीशानां षाड्गुण्यमहिमाश्रये ॥ ३९ ॥

निःश्रेयस विभूत्यर्थं ग्राह्यं दीक्षात्रयं वरम् ।
अभ्यर्थिता त्सुप्रसन्ना त्सविपन्नाच्च देशिकात ॥ ४० ॥
सानुकम्पेन वा तेन नि [ स्व ] यमप्रार्थितेन च ।
कार्यं संशुद्धपापानां भीतानां शरणैषिणाम् ॥ ४१ ॥
संस्कृतानां हि युक्ताना मघक्षाळनकर्मणि ॥ ४१२ ॥

इति श्रीपांचरात्रे श्रीसात्वतसंहितायाम्
अघशान्तिकल्पो नाम

## षोडशः परिच्छेदः ॥१६ ॥

---

## अथ सप्तदशः परिच्छेदः ।

---

नारदः ।

अथ संचोदितो भूय श्श्रीपति र्मुनिसत्तमाः ।
हितार्थं भवभीतानां विभुनाक्षीरपाणिना ॥ १ ॥

संकर्षणः ।

भगवन् विधिना केन प्रसाद मधिगच्छति ।
नृणा माराधकानां तु विश्वधाता नृकेसरी ॥ २ ॥
श्रुत्वैव माह भगवा न्शृणुष्व गदतो मम ।
सिद्धिमोक्षप्रदं मन्त्रं वैभवं मूर्तिनोदजित् ॥ ३ ॥
कामरूपधरं नित्यं नृसिंहस्य महात्मनः ।
वर्णचक्रन्तुपूर्वोक्तं संयुतं [ क्त लक्षण ] वसुधातळे ॥ ४ ॥
उपलिप्तेतु संलिख्य पूजयित्वा यथाविधि ।
समुद्धरे त्ततो मन्त्र मनेकाद्भुतविग्रह [ क्रम ]म् ॥ ५ ॥

प्रणवं पूर्व मादाय तदन्ते विनियोज्य च ।
नवमं नाभिवर्णेभ्य स्तदूर्ध्वं ऽराश्चतुर्दशम् ॥ ६ ॥
तस्योपरि तदन्तस्थं वर्णं गोळकजन्नचसेत् ।
नमोन्तं वर्ण मेतद्वै वाचकं परमात्मनः ॥ ७ ॥
ज्ञानादयो गुणा ष्षड्वै प्रागुक्ता हृदयादयः ।
तदर्थमेव वर्णं तं षोढा संलिख्य केवलम् ॥ ८ ॥
द्वितीयतुर्यषष्ठैश्च द्वादशेनान्तिमेन च ।
चतुर्दशेनाराद्वर्गा त्क्रमाद्वै विनियोजयेत् [हन्तिवै शयेत् (?)]॥९॥
बीजवच्छिरसा सर्वान् लांछये त्पंचमं विना ।
सर्वेषां प्रणवः पूर्व स्स्वसंज्ञां ते नियुज्य च ॥ १० ॥
स्वकीयजाताय श्चान्ते वषडन्ताः क्रमेणतु ।
ॐ नमो भगवते ना रसिंहायेत्यनेन तु ॥ ११ ॥
द्वादशाक्षरमन्त्रेण स्मृत्वा विग्रहवत्पुरा ।
सबाह्याभ्यन्तरस्थेन सांगेना थेन पूजयेत् ॥ १२ ॥
अथ लब्धाधिकारस्तु मन्त्रेणा नेन दीक्षितः ।
भक्तिश्रद्धापरो नित्यं मतिमांश्छिन्नसंशयः ॥ १३ ॥
गुर्वाज्ञाभिरतो नित्यं तर्कवाग्जालवर्जितः ।
स्वकर्मनिरतो नित्यं [ धर्मानिरतो ] वानप्रस्थो ऽथवा गृही ॥१४॥
मन्त्र माराधये द्येन विधिना तं निशामय ।
उपार्ज्य भोगा नखिला न्नचाप्यो पायेन वै पुरा ॥ १५ ॥
स्नातो बद्धकचो मौनी शुद्धवासो ऽर्घ्यपुष्पधृत् ।
कृत्वा द्वार्स्यार्चनाद्यन्तु उपविश्यासने ततः ॥ १६ ॥
सायामां भूतसंशुद्धिं धारणाभ्दां समाचरेत् ।
केवलेन तु मन्त्रेण भावनासहितेन तु ॥ १७ ॥
नाभिदेशस्थितं ध्यात्वा देवं संगृह्य कल्मषम् ।
निरस्तं वायुमार्गेण द्वादशान्ता वधो क्षिपेत ॥ १८ ॥

निरस्तपाप माकृष्य वात[ शंख ]चक्रसमन्वितम् ।
नासाग्रेण तु मन्त्रेशं देहसम्पूरणाय च ॥ १९ ॥
तं ध्याये द्धृदयस्थं च गतिरुद्धेन वायुना ।
चित्तोपशमनार्थन्तु नूनं वायुजयाय च ॥ २० ॥
शनै श्शनै रथ बहिः केवल म्मारुतं क्षिपेत ।
विनान्यरेचकेनैव मन्येषा मुत्तरोत्तरम् ॥ २१ ॥
कालाद्ग्रासं यथाशक्ति नित्यमेव समाचरेत ।
द्वादशान्तेथ मन्त्रेशं तप्तहाटकसन्निभम् ॥ २२ ॥
सहस्ररविसंकाशं वृत्तमण्डलमध्यगम् ।
स्मृत्वाथ मुक्त स्तन्मात्रे निर्दहे द्विग्रहं स्वकम् ॥ २३ ॥
दक्षिणाग्रे रथांगुष्ठ मान्तदेशे शिखाक्षरम् ।
ध्यात्वा युगान्तहुतभु ग्रपज्वाला समा[ वृता ] वृतम् ॥ २४ ॥
तेन स्वविग्रहं ध्याये त्प्रज्वलन्तं समन्ततः ।
देहजां भावये ज्ज्वाला म्मन्त्रनाथे लयं गताम् ॥ २५ ॥
तत स्समन्त्रं तद्बिम्ब माकृष्य हृदि विन्यसेत् ।
अथ हस्तद्वये न्यस्ये दादिमद्वादक्षरम् ॥ २६ ॥
दिव्यं महात्मांगार [ न्तराग ] न्तु तमधिष्ठाय चेतसा ।
स्वमन्त्रा दमृतौघेना सेचये द्विग्रहं स्वकम् ॥ २७ ॥
मणिबन्धा त्करताग्रन्तु मूलमन्त्रपुरस्सरम् ।
हस्तादयो ऽस्त्रपर्यन्ता अंगुष्ठाद्यंगुलीषु च ॥ २८ ॥
सर्वासु युग्मयोगेन नेत्रं नखमुखाश्रितम् ।
आमूर्ध्नश्चरणान्तन्तु द्वादशार्णं न्यसे त्तनौ ॥ २९ ॥
जीवभूतं तदन्तस्स्थं मूलमन्त्रं तथा न्यसेत् ।
हृदाद्यं नेत्रपर्यन्त मंगषट्कं स्वगोचरे ॥ ३० ॥
स्वस्वांगुलियुगेनैव तेजोरूपं विना कृते ।
श्रीवत्सं वक्षसो वामे पूर्णेन्दुसदृशद्युतिम् ॥ ३१ ॥

कौस्तुभं हृदये न्यस्ये च्चण्डदीधितिलक्षणम्।
नानाञ्जवनपुष्पोत्थां वनमालां च कण्ठतः॥ ३२॥
पद्मं दक्षिणपाणौतु शंखं वामकरे न्यसेत्।
गदां पद्मकरे भूयश्शंखपाणौतु चक्रराट्॥ ३३॥
खड्गं दक्षिणहस्तेथ धनु वामकरे न्यसेत्।
आचांता दक्षिणे भागे न्यस्या श्री रुत्तरे तथा॥ ३४॥
पुष्टिं शुल्कायतानं च वक्रमध्ये सरस्वती।
पृष्ठतो विन्यसे न्निद्रां ततः पाणिद्वयेनतु॥ ३५॥
मुद्रां बध्वा स्मरे द्ध्यानं देवोहमिति भावयेत्।
अथ प्रणवपूर्वेण स्वनाम्ना नतिना सह॥ ३६॥
शेषपूर्वन्तु वह्न्यंत मासनं परिकल्पयेत्।
[ शेषन्तु पूर्ववन्नचस्यासनं च परिकल्पयेत्। ]
तदाक्रम्याथ तस्यैव कार्या स्वहृदि कल्पना॥ ३७॥
ब्रह्मस्वरूप ममलं स्वचैतन्यं तदूर्ध्वतः।
विकल्पोपरत कृत्वा इच्छयातु विवर्तते॥ ३८॥
परावनिस्वरूपेण तत्प्रकाशात्मना पुनः।
व्यक्तिभावेन तत्रापि एवं प्रविलये सति॥ ३९॥
विसर्जनन्तु बोद्धव्यं संप्रश्रेतु क्रिया क्रमे।
क्रम एष क्रमोक्तानां मन्त्राणा मवतारणे॥ ४०॥
लांछनादिक्रियाध्यान मेषां चैवहि कल्पना।
ज्ञातव्याराधकेनैव नित्यं कर्मणि कर्मणि॥ ४१॥
मन्त्रन्यास मतः कुर्या द्धस्तन्यासं विना विभोः।
ध्यात्वाथ भावनाजातै र्भोगैः परमपावनैः॥ ४२॥
पूजयित्वा जपान्तं चा प्यवतार्य वहि र्यजेत्।
दक्षिणोत्तरहस्ताभ्यां हृद्बीजेन विचिन्त्यच॥ ४३॥

सूर्यसोमौततःकुर्या द्रव्यदाहसमुद्भवौ ।
तोयमादायपात्रेथ तत्रहृन्मन्त्रितं क्षिपेत् ॥४४॥
पुष्पगन्धसमोपेतं सुसितं शालितण्डुलम् ।
मन्त्रयेत्प्रणवाद्येन बहुशोहृदयेनतु ॥ ४५ ॥
तदुद्धृते नांभसावा अस्त्रमन्त्रं समुच्चरन् ।
प्रोक्षयेत्स्वासनस्थानं यागोपकरणन्तथा ॥ ४६ ॥
विन्यस्याद्भगवद्बिम्बा द्भुक्तम्पुष्पादिकंहियत् ।
अपनीयतुतत्कुर्या द्वासरेणुमार्जनम् ॥ ४७ ॥
धातुद्रव्यमयेकुर्या त्क्षालनंगन्धवारिणा ।
उपलिप्याथभूभागं सांभसागोमयेनतु ॥ ४८ ॥
तत्रमण्डलमालेख्यं सूत्रयित्वापुरासमम् ।
चतुरश्रंचतुर्द्वारं मार्गपीठाब्जभूषितम् ॥ ४९ ॥
त्रिनाभिनेमि षडरं चक्रन्तुकमलाद्बहिः ।
मध्यैस्सितादिकैरागैः पुष्पैर्वा तैश्चतैश्शुभैः ॥ ५० ॥
चन्दनाद्यैस्सुगन्धैस्तु सर्षपैस्तिलतण्डुलैः ।
सर्वौषधिमयेनैव चूर्णेनपरिपूर्यवा ॥ ५ ॥
पुष्पैरथार्घ्यपात्रन्तु मन्त्रैस्सम्पूज्यनिष्कलैः ।
पात्रेपरस्मिन्तस्माद्धि स्तोकमुद्धृत्यचोदकम् ॥५२ ॥
योगपीठार्चनंकुर्या दनुसन्धानपूर्वकम् ।
स्वनाम्नाप्रणवाद्येन नमोऽन्तेनयथाक्रमम् ॥ ५३ ॥
अनन्तेशंस्मरेन्मध्ये सर्वाधारमयंप्रभुम् ।
आग्नेयादौतुधर्माद्य मैशान्यन्तञ्चतुष्टयम् ॥ ५४ ॥
प्रागादावप्यधर्माद्य मुत्तरान्तं न्यसेत्परम् ।
तदूर्ध्वेकमलंध्याये त्स्वनाम्नाथदयोपरि ॥ ५५ ॥
स्मरेत्पत्राश्रितंसूर्य शशांकंकेसरावनौ ।
कर्णिकास्थंहुतभुज ततोगन्धादिनायजेत् ॥ ५६ ॥

गणेशाद्यर्चनंकृत्वा प्रथमगुरुसन्तते. ।
प्रासादुत्तीर्थकलश मादायशुभलक्षणम् ॥ ५७ ॥
तमम्भसास्त्रजप्तेन सम्पूर्यादौतुनिक्षिपेत् ।
तद्गर्भे काञ्चनरत्न बीजान्योषधिसत्फलम् ॥ ५८ ॥
चूतादिविटपोद्भूता सपत्रा पुष्प[ फल ] मञ्जरीम् ।
कौशेयवस्त्रस्त्रक्कण्ठ कृत्वार्चितचन्दनम् ॥ ५९ ॥
तन्मध्येपूजयेन्मन्त्र सागसावरणक्रमात ।
प्राग्दिङ्मण्डलबाह्येथ दत्वावैपुष्पचक्रिकां [पत्रपुष्पिकां] ॥ ६०॥
पीठमन्त्रोपजप्ताच्च तदूर्ध्वेस्थापयेच्छतम् ।
अथावतार्यो हृदया न्मन्त्रोविमलदीधिति ॥ ६१ ॥
कर्मणामनसावाचा सिद्धिमार्गेणसाधकैः ।
अनुष्ठितस्वरूपंच सूर्यबिम्बमिवांभसि ॥ ६२ ॥
कर्मणाप्रेरयेच्चैव वाचातन्मन्त्रमुच्चरेत ।
आगच्छपदसंयुक्त सस्मरेन्मनसाकृतिम् ॥ ६३ ॥
एवमाहूयवैदद्या दर्घ्यंपाद्यंचभक्तितः ।
आमूलात्पर्वमन्त्राणा व्यक्तिस्थानासमर्चनम् ॥ ६४ ॥
अर्घ्यपुष्पादिनाकुर्या त्स्वेनस्वेनस्वकेपदे ।
तदोदित विभोर्देहा द्धृदयाद्यचतुष्टयम् ॥ ६५ ॥
न्यसे त्कमलपत्राणा मापूर्वा दुत्तरान्तिकम् ।
अग्नीशरक्षो वाय्वादिदळे प्वस्त्र यथाक्रमम् ॥ ६६ ॥
नेत्र केसरजालस्थं चक्र नाभित्रयोपरि ।
श्रीवत्सकौस्तुभौ चैव वनमाळा तथैव च ॥ ६७ ॥
उदक्पश्चिमभागस्थे चाक्रीये स्वपर [ प्वपद्म ) त्रये ।
चमल निशिताग्र च नन्दक विन्यसे त्क्रमात् ॥ ६८ ॥
प्राग्भागदक्षिणस्थाभ्या त्रितय चाथ विन्यसेत् ।
कार्मुक हेतिराट्छरा ततो देवस्य दक्षिणे ॥ ६९ ॥

नेमिभागे श्रियन्देवीं पुष्टिमुत्तरतोन्यसेत ।
पृष्ठदेशे स्थितां निद्रा मग्रभागेसरस्वतीं ॥ ७० ॥
वामदक्षिणभागाभ्यां विधिस्थ मिथुधिद्वयम् ।
द्वारेष्वस्त्रं न्यसेद्भूयो मुद्रांकोणचतुष्टये ॥ ७१ ॥
सायुधा नथ दिक्पालान् स्वस्थाने मण्डलाद्बहिः ।
एवं न्यस्यततोध्याये न्मन्त्रव्यूहं यथास्थितम् ॥ ७२ ॥
सर्वदेवमयन्देवं सर्वेषां तेजसांनिधिम् ।
सर्वलक्षणसम्पूर्णं सार्वज्ञ्याादिगुणैर्युतम् ॥ ७३ ॥
निष्टप्तकनकाभंच सम्पूर्णांगं महातनुम् ।
घोरशार्दूलवदनं चण्डमार्ताण्डलोचनम् ॥ ७४ ॥
सौदामिनीचयप्रख्ये लोमभिःपरिपूरितम् ।
अरुणाम्भोजपत्राभं चक्राधिककरेरुहं ॥ ७५ ॥
चलत्फणीश्वरसटं चन्द्रकोटिशतद्युतिं ।
यमन्तमान्तरंवह्नि खरंध्रे [ मन्त्रे ] मांहतानुगैः ॥ ७६ ॥
मळयाम्बुदनिर्घोष मुद्गिरन्तं स्ववाचकम् ।
युगान्तहुतभुग्ज्वाला मण्डालान्त र्व्यवस्थितम् ॥ ७७ ॥
षडस्त्रंचाप्यष्टबाहुं[षडस्त्रभृच्चाष्टभुजं]व्याप्यलोकान्स्थितंप्रभुम् ।
दिव्यगन्धानुलिप्तांगं दिव्याम्बरधरंतथा ॥ ७८ ॥
दिव्यस्रग्वेष्टनोपेतं दिव्यालंकारमण्डितम् ।
कौस्तुभेनोरसिस्थेन श्रीवत्सेनाप्यलंकृतम् ॥ ७९ ॥
रत्नकांचनसन्मुक्ता युक्तपावनमालया ।
सब्रह्मसूत्रपार्श्वेव शोभितं परमेश्वरम् ॥ ८० ॥
भुजान्यस्त्रवरैर्दीप्तैः कमलाधैर्युतानिच ।
क्षीरसागरवच्छुभ्रं ततःपद्मन्तुदक्षिणे ॥ ८१ ॥
प्रणवध्वनिगर्भन्तु हिमाद्रिशतशोऽधिकम् ।
वामेशंखवरंध्याये द्गदाखड्गौ ज्वलत्प्रभौ ॥ ८२ ॥
दक्षिणेपाणियुग्मेथ चक्रंकालानलद्युतिम् ।
सधनुर्वामहस्ताभ्यां ततःपाणिद्वयेनतु ॥ ८३ ॥
अविद्यादळनीम्मुद्रां क [ कू] मांख्यां संस्मरेत्प्रभोः ।
एवमेवाहि हन्मन्त्रं ध्यायेत्कुमुदपाण्डरम् ॥ ८४ ॥
पद्मरागाचलाकार मारक्तं च शिर स्स्मरेत्व ।

अंजनाश्मप्रतीकाशं सिखामन्त्रं तथाकविम् ॥ ८५ ॥
परित स्सुर्यसन्तप्तो यथा कनकपर्वतः ।
तथा कवचमन्त्रं च ध्यानकाले विचिन्तय च ॥ ८६ ॥
ग्रुमोऽग्यालासहस्रै स्तु अपस्कान्तअमयाति ।
सर्वास्त्रशक्तिसंपूर्ण श्वास्त्रमन्त्रः प्रकीर्तितः ॥ ८७ ॥
निर्धूमांगारशिखर सदृशो नेत्रमन्त्रराट् ।
ध्येया स्स्वरुचिसंयुक्ता द्विभुजाः पुरुषोत्तमाः ॥ ८८ ॥
सास्त्राः कौस्तुभपूर्वा ये गदामालेऽगनाकृती ।
फुल्लपद्मोदराभ श्री नलिनीनाळ्यायुता ॥ ८९ ॥
चन्द्ररश्मिप्रतीकाशा श्वेतचामरधारिणी ।
पूर्णेन्दुमुखदर्शी पुष्टि रुद्वहन्ती च प्राणिनां ॥ ९० ॥
सम्पूर्णं मम्लीनेव कलशं कांचनोत्थितम् ।
विज्ञानपुस्तककरा स्फटिकाभा सरस्वती ॥ ९१ ॥
फुल्लेन्दीवरसंकाशा त्वक्षसूत्रकरांकिता ।
ध्येया भगवती नित्य सर्वा श्चामरलांछिताः ॥ ९२ ॥
सम्मुखा देव देवस्य वस्त्रालंकारमण्डिताः ।
एवं ध्यात्वा ततः कुर्या त्पूजनं कुसुमादिकैः ॥ ९३ ॥
स्नाने विलेपने वस्त्रे माल्ये धूपे श्च दीपकैः ।
दध्ना च मधुमिश्रेण क्षीरेणाज्यान्वितेन च ॥ ९४ ॥
हृद्ये मृष्टे स्थिरे मेध्ये नैवेद्ये विविधे शुभैः ।
यथा कालोद्भवैः स्सर्वैः फलमूलै स्तु षड्सैः ॥ ९५ ॥
पूजिते मुक्तदोषे स्तु मुद्रामात्रोपलक्षितैः ।
मूले ध्याने स्तथा स्विद्ये बीजैर्हो [ हूं ] मादिना ऽथवा ॥ ९६ ॥
तत स्स्वहस्तौ संस्कृत्य अम्भसा लंभनादिना ।
स्वदर्शये न्मुद्रां त्रिशिखां सम्मुखे विभोः ॥ ९७ ॥
ध्यात्वा त्त्रांसिरूपन्तु दक्षिणा दंगुळित्रयम् ।
स्पष्ट मूर्ध्वशिखा सैव ज्येष्ठा त्वनन्ता कनीयसी ॥ ९८ ॥
अधोखिलस्वरूप ञ ध्वान्तातीतो ऽखिरूपकृत ।
देवो गुणत्रयातीत स्तथा मान्त्रयातिगः ॥ ९९ ॥
धर्मे स्स्थूलतरे मुक्तो योयं व्यक्तो धियार्चितः ।
सम्पुटं हृदयोद्देशे बध्वा हस्तद्वयेन तु ॥ १०० ॥

निरन्तराभ्यां शाखाभ्यां मुद्रेषा हार्दिकी स्मृता ।
अंगुष्ठादि कनिष्ठान्त शाखायुग्म पृथ क्पृथक् ॥ १॥
सान्तरं सम्पुटं दस्मा त्कनिष्ठादौ तथा भवेत् ।
शिर श्शिखा तनुत्राख्य नेत्रमुद्रा यथाक्रमम् ॥ २ ॥
अस्त्रा मंगुष्ठयुग्मन्तु मुद्राया करमध्यगम् ।
प्रदेशिन्या ततो विद्धि कानष्ठान्तं त्रियादिषु ॥ ३ ॥
स्वमन्त्रयुक्ता चान्येषा मर्चिताना यथाक्रमम् ।
पुनः पुन. प्रयोक्तव्या हार्दय शिरसा सह ॥ ४ ॥
परस्परमुखोश्लिष्टौ शाखाक्रान्तौ परस्परम् ।
किन्तुवेदक्षिणहस्त मूर्ध्वचाप्यधरेपरम् ॥ ५ ॥
अधियादळनीह्येषा मुद्रापूर्वंमुदाहृता ।
एवंमुद्राचयकृत्वा पूजाकृत्वा पुनःप्रभो. ॥ ६ ॥
यथाशक्तिजपकुर्या च्छतमष्टाधिकन्तुवै ।
एकैकहृदयादीनां सर्वेषा विहितत्वथ ॥ ७ ॥
क्रियांगत्वान्नदोषो ऽस्ति अन्यथा वजपविना ।
समर्चंयित्वाष्टांगेन प्रणम्यपरमेश्वरम् ॥ ८ ॥
स्मृत्वानुज्ञांसमादाय यजेद्वह्निंगततः ।
कुण्डसुलक्षणंकृत्वा सस्कारै स्संस्कृतपुरा ॥ ९ ॥
पूजयित्वा ऽर्घ्यं पुष्पाद्यै स्तत्राग्नि मवतार्यच ।
सुसमिद्धञ्च निर्धूम सशुद्ध ताडनादिना ॥ ११० ॥
अर्घ्यैर्नीरंघ्रकुसुमै पूजयित्वाथ भावयेत् ।
व्यस्तैागुणगणष्षट्क स्तेजोनाम गुणोह्ययः ॥ १ ॥
परस्यब्रह्मणस्सोयं सामान्यसर्वतेजसा ।
ध्यात्वैव नेत्रमन्त्रेण निक्षिपे त्कुण्डमध्यतः ॥ २ ॥
पावनैरिन्धनैश्शुष्कैः कृत्वानिर्धूममेवतम् ।
समिद्भिरर्चयित्वाथ तन्मध्येमन्त्रमण्डलम् ॥ ३ ॥
ध्यात्वा ऽभ्यर्च्य यथापूर्वं सन्तर्प्य सघृतैस्तिलै. ।
परिवारयुतन्देव सहस्रशतसख्यया ॥ ४॥
दद्यात्पूर्णाहुतिसम्य ग्घोमसख्यानिवेद्यच ।
ततश्शुचीन् सोपवासान् शोधितान् बद्धलोचनान् ॥ ५ ॥

भक्तान्प्रवेशये तत्र गृहीतकुसुमांस्तुवै ।
प्रक्षेपयेन्मण्डलान्त नेत्रबन्धं विमुच्यच ॥ ६ ॥
अष्टाङ्गप्रणिपातैस्तु प्रदक्षिणयुतैस्ततः ।
देवश्चाग्नि र्गुरुःकुम्भः पूजनीयःपुनःपुनः ॥ ७ ॥
तत्काळे भक्तिभावेन विज्ञातायोग्यतायथा ।
तीव्रमन्दादिकां तेषां तदादीक्षां समाचरेत् ॥ ८ ॥
शुद्धयाद्वचस्तसंशुद्धौ शतमष्टाधिकन्तुवै ।
तिळान्नान्सद्दद्राज्यस्य द्वादशार्णेन शुद्धिमान् ॥ ९ ॥
दद्यात्पूर्णाहुतिपश्चा न्मन्त्रमर्घ्यादिनार्चयेच ।
ततश्चांगसमूहेन प्रागुक्त परि [ दळ ] संख्यया ॥ १२० ॥
कुर्याद्व्यक्तशुद्ध्यर्थं दद्यात्पूर्णाहुतिततः ।
स्वरूपापादनार्थन्तु मूलबीजेनवैतया ॥ १ ॥
प्रणवादिनमोन्तेन कुर्यां व्होम मतन्द्रितः ।
ध्यात्वानिरस्तबन्धन्तं शुद्धंशान्ततु सर्वगं ॥ २ ॥
समस्तसंविपूर्णंच दद्यात्पूर्णाहुतिततः ।
मूलमन्त्रेणमन्त्रज्ञो भक्तानामनुकम्पया ॥ ३ ॥
समर्पश्चावयेत्पश्चा त्कुम्भे ऽग्नौ मण्डलेततः ।
भक्त्यानपातुसम्मात्र मैहिकामुष्मिकांवया ॥ ४ ॥
नास्याः कुर्याः परित्यागं कर्मणा मनसा गिरा ।
साध्यं विना न कुर्यां स्तु स्नानादीनां च लोपनम् ॥ ५ ॥
याव जीवं यथाशक्ति संस्थितो यत्र कुत्र चित्र ।
स्थानेषु हृदयाद्येषु कुर्या न्मन्त्रगणार्चनम् ॥ ६ ॥
द्रव्यैः पुष्पाम्बुपूर्वै स्तु तदभावे तु वै हृदि ।
मानसीं पूर्ववत्पूजां निर्वर्तेन्न्यासपूर्विकाम् ॥ ७ ॥
मन्त्रनाथं गुरु म्मन्त्रं समत्वेनाभिवीक्षयेत् ।
मन्त्रमण्डलमुद्राणां परां गुप्तिं समाचरेत् ॥ ८ ॥
दूरादेव नमस्कार्यो मृगराट्प्याग्र एव वा ।
तदाकृतिर्मृगो ऽन्यो वा तत्समंवापि नारुहेत् ॥ ९ ॥
नचाक्रमेत पादेन नच तत्पावके क्षिपेत् ।
पद्मपत्रे स्तथाश्वत्थपर्णे भोजनभाजनम् ॥ १३० ॥

घर्जनीयं तथा शंख पद्माद्यंकित मासनम् ।
नक्तं वा परपिण्डं [ परिपीडं ] वा प्येकादश्यां समाचरेत ॥ १ ॥
विशेषपूजनं कुर्या द्वादशी ष्वखिलासु च ।
अयनादिषु चान्येषु सूर्यसंक्रमणेषु च ॥ २ ॥
न भूतग्रहदुष्टानां व्याधीनां वा कदाचन ।
असिद्धेन स्वमन्त्रेण कुर्या दुत्सा रणं [ दनं ] तु वै ॥ ३ ॥
मन्त्रजं सिद्धिलिंगं य स्स्वप्ने प्रत्यक्षतोपि वा ।
अनुभूतं न वक्तव्यं कस्यचि द्गुरुणा विना ॥ ४ ॥
व्यक्तं नृसिंहबीजन्तु दृश्यते यत्र कुत्र चित् ।
नमस्कुर्या त्समभ्यर्च्य वाक्पुष्पे स्सप्रदक्षिणैः ॥ ५ ॥
कृत्वाश्रुपातं शोकं वा विप्रयोगनिमित्ततः ।
स्नानादृते न कुर्यां द्वै देवाग्निपितृतर्पणम् ॥ ६ ॥
आनाभिवर्धना त्काला दन्यत्र सति संकरे ।
सूतकाद्ये न कर्तव्यं प्रागुक्तं चैव यत्नतः ॥ ७ ॥
स्वानुष्ठानं हि वै यस्मा दागमा त्समुपागतम् ।
तस्य सम्पूजनं यत्ना द्रोपनं च समाचरेत ॥ ८ ॥
ब्राह्मणादी न्यथाशक्ति दीनानाथां श्च पालयेत् ।
एवं हि समया न्दद्या द्भक्तानां भावितात्मनाम् ॥ ९ ॥
सम्पालनाच्च येषां वै प्राप्नुया न्मन्त्रजं फलम् ।
इष्ट्वैवंहि ततः कुर्या त्सेचनं कलशेन तु ॥ १४० ॥
आत्मन श्चानुभक्तानां नैवेद्यं प्रार्थये त्ततः ।
ब्राह्मणाय च तद्दद्यात् हृद्यं मेध्यं च शोभनम् ॥ १ ॥
क्षमापये त्ततो देवं यत्र यत्रावतारितम् ।
अथ शिष्टं स्तु नैवेद्यं यजे द्गुणपार्श्वे प्रभुम् ॥ २ ॥
विष्वक्सेनाभिधानंचा प्यर्घाद्यै रर्चितोहि यः ।
चरुरूपेण चान्नेन सोदकेन ह्रदा ततः ॥ ३ ॥

यद्दिराराधनस्थाना त्मादक्षिण्येन निक्षिपेत् ।
पूर्वादीशानपर्यंतं मन्त्री भूतबलिंतदा ॥ ४ ॥
ततो विसर्जनंकुर्या दुपसंहृत्यचाखिलम् ।
विनिक्षिप्यांभसोमध्ये पत्रपुष्पादिनिक्षिपेत् ॥ ५ ॥
निष्कामः पावनार्थन्तु स्तोकमुद्धृत्यवैपुरा ।
सन्धायमन्त्रपूर्वंमा क्तमश्नीयाद्वमौनवान् ॥ ६ ॥
भोजनान्तेततःकुर्या त्संमानेतुनिशामुखे ।
मंत्रजापं ततोध्यानं तोयतर्पण पूर्वकम् ॥ ७ ॥
तथैवं रात्रिशेषन्तु काळं सूर्योदयावधि ।
कर्तव्यं सजपं ध्यानं नित्य माराधकेनतु ॥ ८ ॥
एवमेव विधानेन पूजयित्वा दिनेदिने ।
जपे ल्लक्षाष्टकं मंत्री ततस्सिद्ध्यति मंत्रराट् ॥ ९ ॥
ददातिमनसोऽभीष्टा स्सिद्धीस्सर्वान्तु रूपकाः ।
रुद्रादिर्येद्र ऋषिभ्यो भक्तेभ्यश्चमयोदितं ॥ १५० ॥
लोकचित्तानुसारेण शास्त्रवै युगभेदतः ।
यागोयागोपकरणं विमळं प्रतिमादिकम् ॥ १ ॥
ज्ञातव्यं तत्त्वयासम्य गविरोधेन सर्वदा ।
आगमेभ्यो ऽ थतज्ज्ञेभ्य स्सकाशा दात्मसिद्धये ॥ २ ॥
यथोक्त मिहसंक्षेपा द्वदेदन्यत्र विस्तरात् ।
अथसंसाधितम्मन्त्रं ब्रह्मचर्यादिसंयमैः ॥ ३ ॥
पयोयावक शाकांबु घृतमूलफलाशनैः ।
मन्त्रीपयामयुंजीया च्छान्तिकादिषुतच्छृणु ॥ ४ ॥
ज्ञात्वादौ स्वशरीरोत्थै र्लौकिकै रपिलक्षणैः ।
प्राप्तेन स्वप्नयोगेन संस्थितिं जीवितस्यच ॥ ५ ॥
ततश्शल्यादि निर्मुक्त स्थानमावायशोभनं ।
संच्छन्न शरजालेन वाम्बरेणाथवागृहम् ॥ ६ ॥

तत्रमण्डलमालिख्य सर्वोपकरणान्वितम् ।
चन्दनक्षोदयुक्तेन शशिनासहितेनच ॥ ७ ॥
सुगन्धशालिचूर्णेन माग्रुदीरितलक्षणम् ।
निर्वृणं लक्षणाढ्यञ्च पूरितंगालिताम्भसा ॥ ८ ॥
हेमरत्नौषधीयुक्त शाखादूर्वाफलोदरम् ।
धूपिताद्दतह्लुक्ष्केन वाससापरिवेष्टितम् ॥ ९ ॥
सुसमाधारसंस्थंच याहृतोमण्डलस्यच ।
विन्यसेत्समसूत्रेण दिग्विदि ऋनलाष्टकम् ॥ १६० ॥
सुधाचन्दन लिप्तांग लाजतंदुलपूरितम् ।
श्वेतपट्टगलोपेतं सितपुष्पस्त्रगन्वितम् ॥ १ ॥
मुक्ताफलोदरं चैव बीजमल्लक [ बीजामलक ] भूषितम् ।
उपकुम्भाष्टकं त्वेवं कुम्भाना मुपरि न्यसेत् ॥ २ ॥
श्वेतचामरसंयुक्तं सित मूर्ध्ववितानवाम् ।
बध्वा सितेन सूत्रेण सप्तधा कलशाष्टकम् ॥ ३ ॥
संवेष्ट्य कण्ठदेशान्तं त्वच्छिन्नेन दृढेन च ।
कृत्वैवं च तत स्स्नाया त्कुर्या प्रचाखादिदं ततः ॥ ४ ॥
निशांशुना चन्दनेन श्वेतदूर्वांकुरेण च ।
सुश्लक्ष्ण भूर्जपत्रेतु नाम सान्तर्गतं लिखेत् ॥ ५ ॥
श्रवान्तोपगतेनैव कुर्या द्बीजेन संयुतम् ।
कमलं तद्बहिर्लिख्य मष्टपत्रं सकर्णिकम् ॥ ६ ॥
नाभितुर्य मथोवक्त्रं वर्णपत्राष्टके लिखेत ।
तदन्त स्वचतुर्थ्यन्तं मन्त्रेश च लिखे त्परम् ॥ ७ ॥
नतिप्रणवगर्भन्तु ततः दामरवाह्यगम् ।
विलिख्य नेमिनचमं द्विधोर्ध्वाधोमुखं तु वै ॥ ८ ॥
संवेष्ट्य सितसूत्रेण अपि कुम्भे निवेशयेत् ।
आधारं शालिचूर्णोये मण्डलाग्रे निधाय तम् ॥ ९ ॥

आवाह्य मण्डले मन्त्रं मागवद्धृदयकोटरात ।
तत श्चेतोपचारेणा तन्त्रमन्त्रेश्वरं यजेत ॥ १७० ॥
पूर्णेन्दुमण्डलान्तस्थ मुद्गिरन्तं सुधारसम् ।
शशांकशतसंकाशं ध्यात्वा सपरिवारकम् ॥ १ ॥
यत्र यत्र महाशान्ति पूजान्ते समुदीरयेत् ।
ततः शशांकदिग्भागे कुण्डे पूर्णेन्दुलक्षणे ॥ २ ॥
क्षीरतण्डुलमध्वाज्ये गुंग्गुलेन तिलेन च ।
सचन्दनेन होमं तु सप्तरात्रं समाचरेत् ॥ ३ ॥
पयोभुक्परमेशं च महराष्टक मर्चयेत् ।
होमान्ते कलशस्थस्य पयसा शीतलेन तु ॥ ४ ॥
सेचनं चाम्भसीं कुर्या त्प्रत्यहं महराष्टकम् ।
स्नानान्ते क्षीरम्भोधौ संस्मरे न्मन्त्रनायकम् ॥ ५ ॥
स्रवन्त ममृतं त्वेवं शान्ति र्भवंति शांश्वती ।
अथवादाय मृत्पात्रं वैदलं वाथ काष्ठजम् ॥ ६ ॥
तत्र पंकजंय त्कुर्या द्रचनामोदनेन च ।
पिष्टनिर्मितपात्राणां सम्प्रज्वाल्य घृतेन तु ॥ ७ ॥
दीपाष्टकं ततः पूजां कुर्या त्पूजादिके यंत्रैः ।
स्विन्नानि सप्तबीजानि विकीर्यंच तदूर्ध्वतः ॥ ८ ॥
ततोर्चिते तोयकुम्भे धूपपात्रन्तु विन्यसेत ।
अच्छिन्नधूपप्रसरं त्रैकाल्यं च बलिं हरेत् ॥ ९ ॥
शान्त्यर्थदेशपालानां भूताना मेव मेवहि ।
पृष्ठे चोदकधारां वै अच्छिन्नां पदसप्तकम् ॥ १८०॥
शान्तये बलिमन्त्राणा : मस्त्रमन्त्रेण पातयेत् ।
इति शान्ति विधानश्च पौष्टिकंच निबोधतु ॥ १ ॥
कुङ्कुमक्षोद: मिश्रेण कुसुम्भरजसात्तुवै ।
पूर्वयन्मण्डलंकुर्या द्रक्तचन्दन भूषितम् ॥ २ ॥

नीवारतण्डुलेनैष ताम्रवर्णे स्थिते [ स्थिते ] शुभैः ।
सम्पूर्णबदरोपेते रूपकुम्भाष्टकंद्वियत् ॥ ३ ॥
सोपकुम्भानिकुम्भानि रक्तसूत्रेणवेष्टयच ।
शेषपद्धिद्वितंचात्र तत्तद्रक्तं प्रकल्पयेत् ॥ ४ ॥
ततस्नातः कृतन्यासो नाम रोचनयालिखेत् ।
अलक्तकाद्युयुक्तेन सान्द्रदर्भाकुरेणतु ॥ ५ ॥
पूर्ववत्पद्मगर्भस्थं ततःपत्रेष्वधोमुखम् ।
बीजन्नियोजयेत्तस्मै गदतश्चावधारय ॥ ६ ॥
नेमेरेकोनाविंशाख्य वर्णस्याधोगतंन्यसेत् ।
बीजंनाभितृतीयंय तदधःपंचमारगं ॥ ७ ॥
शिरसारान्तपूर्वेण युक्तंवाद्या दशादिना ।
तदन्तस्थं न्यसेद्बीजं नाभितुर्यासनस्थितम् ॥ ८ ॥
नाभिसप्तमगर्भेष विन्यसेत्कमलन्तुतत ।
बीजंपुष्टिपदोपेतं कुरुवौस्पासमन्वितम् ॥ ९ ॥
लिखेत्प्रणवपूर्वंतु बहिरष्टासुदिक्षुवै ।
संवेष्टच रक्तसूत्रेण मधुतोयघटेन्यसेत ॥ १० ॥
निधायपूर्ववत्कुर्या द्दिग्बन्धं हृदयादिकैः ।
अस्त्रेणतुविदिग्बन्धं नेत्रेणेर्ध्वमधस्तथा ॥ १ ॥
ततोविद्रुमसंकाशं मन्त्रमावाह्य संयजेत ।
अथोमन्त्रगणंसर्व लोकेशाख्यान्त संयुतम् ॥ २ ॥
रक्तैरकण्टकैर्हृद्यै रर्चनंकुसुमैर्हितम् ।
राजमुद्गैस्तु नैवेद्यं युक्तमत्र गुळोदनं ॥ ३ ॥
गुळरञ्जितभक्ष्याणि कुर्यान्नानाविधानिवै ।
सम्भवेसतिवैरक्त सर्वकार्यमसम्भवे ॥ ४ ॥
रञ्जयेत्कुकुमाद्येन केनचिद्रक्तधातुना ।
सर्वं जपावसानन्तु कुर्याद्धोमं समाचरेत ॥ ५ ॥

घृतैस्तिलैस्तुपूर्वोक्तै शर्कराबदरान्वितैः ।
दत्वापूर्णाहुतिंकुर्या त्सेचनं शर्कराम्भसा ॥ ६ ॥
पूर्वयन्मन्त्रनाथस्य साध्यगर्भीकृतस्यच ।
ततःपूर्वोक्तविधिना बलिकर्मसमाचरेत् ॥ ७ ॥
सप्तरात्रं त्रिरात्रंवा पुष्टिरुत्पद्यते महत ।
प्रभावान्मन्त्रराजस्य विधिनाऽनेनसर्वदा ॥ ८ ॥
अथानेनहिमन्त्रेण कुर्यादाप्यायनन्तुवै ।
परस्यैवात्मनोमन्त्री यथातदवधारय ॥ ९ ॥
मण्डलंमधुनायुक्तं चतुर्वर्णकभूषितम् ।
वस्त्रस्रग्दर्पणोपेतं किंकिणीर्व्यजनान्वितम् ॥ २०० ॥
घृतेनमधुनादध्ना पयसासुश्रितेनच ।
न्यस्तेनउपकुम्भौतु द्वौद्वौसम्पूर्ययत्नतः ॥ १ ॥
मधूकफलकर्पूर द्राक्षामलकफलैस्वस. ।
पार्श्वयोपूर्यकुम्भानां चक्रदेशेनिधायच ॥ २ ॥
सांकुराणिशरावाणि सिक्तानिशिशिराम्भसा ।
सुधाचन्दनलिप्तानि सितपुष्पान्वितानिच ॥ ३ ॥
चर्चितानिसिताद्येण योग्यकुम्भान्तरायवैः ।
सितरक्ततन्तुहेमाभं पुष्पाद्यमखिलंन्यसेत् ॥ ४ ॥
उपचारैतुविहितै तदाहरयाखिलंतुवै ।
कृताह्निकशुक्लवासा स्सितहमन्त्राभिधानधृक् ॥ ५ ॥
सकुंकुमेनक्षीरेण ईर्षादिक्षुरसेनच ।
तथाचमधुनाभूर्जे वस्त्रेवासार्णमध्यगम् ॥ ६ ॥
दत्वासंज्ञापदंकुर्या द्वाह्येपद्मचतुर्दलम् ।
तद्बहिर्द्विगुणैः पत्रैः कर्णिकाकेसरान्वितम् ॥ ७ ॥
द्विपटकपत्रंतद्न्नु तद्बहिष्षोडशच्छदम् ।
ततस्त्रिरष्टपत्रन्तु तद्बाह्ये वृत्तमालिखेत् ॥ ८ ॥

अधोमुखन्तुसर्वेषां दळानाम्बीजपञ्चकम् ।
क्रमेणपूर्वपद्मात्तु योजनीयंहितच्छृणु ॥ ९ ॥
नाभिसप्तमवर्णस्य ह्यभितुर्योपरिस्थितम् ।
उत्तराधरयोगेन तदेवादाय वैपुनः ॥ २१०॥
अथनाभितृतीयन्तु अधोद्धाभ्यांतु विन्यसेत् ।
अथस्थं सप्तमन्नाभे स्तच्चतुर्थंतु मूर्धनि ॥ १ ॥
ततस्सप्तममादाय तृतीयं तदधोन्यसेत् ।
तदधोनेमिवर्गाद्य योजयेदूनविंशकम् ॥ २ ॥
भूयोनेमेस्तमादाय नाभिसप्तमपृष्ठगम् ।
तस्याप्यधस्तृतीयन्तु नाभिदेशाद्यविन्यसेत् ॥ ३ ॥
सर्वेषांनाभिपूर्वन्तु पंचमारगसंयुतम् ।
निदध्यादासनंपश्चा च्छिरंसालांछयेत् क्रमात् ॥ ४ ॥
नवमेनतुवेनेमे रदोपान्त्य गतेनतु ।
नाभीयतुर्यवर्णानां मध्यमध्ये ऽ त्रमन्त्रराट् ॥ ५ ॥
षोषट्पदद्वयान्तस्थ मधवीजंहि केवलम् ।
दळान्तराळभूमौतु चतुष्पत्रस्य योजयेत् ॥ ६ ॥
अरावसानसम्भिन्नं कृपावेनाभिसप्तमं ।
तेनयुक्तं तथादद्या दष्टपत्रस्य सन्धिषु ॥ ७ ॥
तेनैवनाभितुर्यन्तु भेदयित्वा तदन्तगम् ।
कृपाबीजवरं कुर्या द्विषट्पत्रान्तराळगम् ॥ ८ ॥
षषट्कारपदोपेतं बीजंपीताम्बुसन्निभम् ।
न्यसेत्षोडशपत्रस्य सन्धिदेशगतंततः ॥ ९ ॥
नाभेस्सप्तमबीजन्तु तच्चतुर्थासनस्थितम् ।
अराश्चतुर्दशेनैव तदन्तेना पि [ भि ] भूषितम् ॥२२० ॥
पत्रासम्पुटमध्यस्थं क्षरन्तममृतंमहत् ।
पूर्ववद्वाह्यपत्रस्य प्रादक्षिण्येनविन्यसेत् ॥ १ ॥

नाभिगुर्यमधादाय स्थितंतत्सप्तमोपरि ।
नेमेर्नवमबीजेन अरान्तायेनचांकयेत् ॥२॥
बीजमेतत्रियोक्तव्यं संख्याहीनंनिरन्तरम् ।
ऊर्मिभूतंबहिस्तस्य पयोजावरणस्यच ॥ ३ ॥
लिख्यैवं सितरक्तेन पीतसूत्रेण वेष्टयेत ।
मध्विक्षुरस आम्राम्बु पूर्णकुम्भे नियोज्यच ॥ ४ ॥
चन्दनेनसमालिप्तं कृत्वापुष्पस्त्रगन्वितम् ।
हवियायोदितेस्थाने ततोमन्त्रेश्वरंयजेत् ॥ ५ ॥
हृत्पुण्डरीक मध्यस्थं परिवारसमन्वितम् ।
स्वच्छ स्फाटिकवर्णाभं हिमा दधिकशीतळम् ॥ ६ ॥
ध्यायेत्तं ब्रह्मरन्ध्रोर्ध्वे सितंपद्म मधोमुखम् ।
तत्कर्णिकोदरेळीनं स्मरेद्गगनमण्डलम् ॥ ७ ॥
प्रकाशितं निशानाथ मयूखा खिलतारकैः ।
विक्षिप्तबाहैराकीर्णं सुरसिन्धु विनिर्गमैः ॥ ८ ॥
अथार्घ्यं पुष्पपूर्वाणां भोगाना मर्चनेविभोः ।
प्रागुक्तानां क्रमेणैव अनुसन्धान माचरेत् ॥ ९ ॥
यंपं संकल्पयेद्रोगं तन्तम्भाव्य सुधामयं ।
पतन्तमंबराद्वेगा दमृतांशुपरिप्लुतम् ॥ २३० ॥
साक्षादमृत रूपस्तु ते स्ते रमृतसम्भवैः ।
कृहितं मुदितंमग्नं सम्प्लुतं मन्त्रराट्स्मरेत ॥ १ ॥
ततो ऽवतार्य हृदया त्साधनेन यजेद्बहिः ।
इष्टा ऽथबाह्ये गर्भस्थं ध्यात्वा सन्तर्पये त्ततः ॥ २ ॥
सामळैराज्य सिक्तैस्तु बिल्वैर्दूर्वा कुरैर्नवैः ।
तिळैर्गोक्षीरसंयुक्तैः छाजतण्डुळ मिश्रितैः ॥ ३ ॥
सिताज्यपुष्पसंयुक्तैः, दद्यात्पूर्णहुतिंततः ।
मधुक्षीरोदकेनाथ कुर्या द्वै मन्त्रसेचनम् ॥ ४ ॥

घृतेन पयसान्नेन पायसेन फलै श्शुभैः ।
पूर्ववद्बलिदानं तु कुर्या दाप्यायनं भवेत् ॥ ५ ॥

अथ रक्षाविधानं तु वक्ष्ये सम्य ग्यथा स्थितम् ।
येन विज्ञातमात्रेण नीरुज स्सर्वदा भवेत ॥ ६ ॥

सामान्यं सर्वदोषाणां ज्ञातानां च निवारणे ।
अज्ञातानां विशेषेण सासम्य गवधारय ॥ ७ ॥

ताराग्रहोपतापेन धातु वैषम्य मेति वै ।
तद्वैषम्या त्प्रकुप्यन्ति व्याधयस्तु ज्वरादयः ॥ ८ ॥

तत्कोपावसरेणैव ब्रह्मरक्षो सुरा ग्रहाः ।
शाकिन्यो भूतवेताळा स्संक्रामन्ति हि देहिनः ॥ ९ ॥

निमित्तं विद्धि सर्वेषां कर्म यद्वै पुरा कृतम् ।
सामर्थ्येन तु मन्त्रेण ज्ञानेन तपसा च यैः ॥२५०॥

जपाध्ययनहोमेन दानेन विविधेन च ।
मन्त्रौषध्युपयोगेन सहसा नाश मेति तत् ॥ १ ॥

प्राधान्येन तु सर्वेषा म्मन्त्रमत्रानुतिष्ठति ।
यस्य स्मरणमात्रेण ना विशन्ति गृहादयः ॥ २ ॥

कृत्वाधारं यथोक्तं तु यजनार्थं नृकेसरेः ।
बीजै स्सिद्धार्थकोपेतै स्तपकुम्भानि पूर्यच ॥ ३ ॥

सङ्केष्वप्युपकुम्भानां सफलानि नियोज्य च ।
तिलसर्षपपूर्णानि पत्राणि विततानि च ॥ ४ ॥

सुसमं तद्वहि र्दद्या द्दिशु लोहशराष्टकम् ।
कण्ठदेशेषु पग्रीया च्छराणां दृढतन्तुना ॥ ५ ॥

बर्हिपक्षसमायुक्तां सर्पकञ्चुकभूषिताम् ।
महौषधीं भूतजटां शमीशाखासमन्विताम् ॥ ६ ॥

पंचरागेण सूत्रेण उदगाशा दितः क्रमात् ।
प्रादक्षिण्येन तु त्रेधा वेष्टये त्तच्छराष्टकम् ॥ ७ ॥
अष्टानां पूर्णकुम्भाना मन्तरान्तरयोगतः ।
दद्या दुद्धाखनस्थन्तु दीपाष्टक मनुक्रमात् ॥ ८ ॥
तैळेन राजिकाख्येन ताम्रपात्रस्थिता स्तु वै ।
दीपानां वर्तयो देया महाराजतरंजिताः ॥ ९ ॥
अथ बद्धशिखो मौनी प्राग्वद्दिग्बन्ध माचरेत् ।
अभिसन्धाय मनसा सर्वदोषपलायनम् ॥ २५० ॥
संपजे न्मन्त्रनाथन्तु काम्यै र्बहुविधै श्शुभैः ।
पुष्पै र्धूपै स्तु नैवेद्यै र्भक्ष्यै स्सफळमूळकैः ॥ १ ॥
हुत्वाथ सर्वबीजानि सिद्धार्थकयुतानि च ।
राजिका घृतयुक्तानि तिळानि सफलानि च ॥ २ ॥
ध्यात्वा पूर्णाहुतिं दद्या न्मध्याह्नसमये ततः ।
रक्ष्यं सुनिर्मळं कृत्वा पूर्व मभ्यंजनादिकैः ॥ ३ ॥
हेमरक्तौषधिस्नानैः प्रोक्षयित्वा प्रवेश्य च ।
ताडयित्वा स्वपुष्पेण आपादा त्सुनिरीक्ष्य च ॥ ४ ॥
नतजानुशिरः कृत्वा देवाय विनिवेदयेत् ।
उत्तराभिमुखं कृत्वा आसने परिधान्विते ॥ ५ ॥
भस्मोपळक्षिते चैव तथार्घ्यादिसमन्विते ।
षडंगेनाथ मन्त्रेण तस्य न्यासं समाचरेत् ॥ ६ ॥
मनसा करशाखासु स्वस्थाने ष्वथ विग्रहे ।
स चक्र मथ तस्याग्रे षट्कोण म्मण्डलं लिखेत् ॥ ७ ॥
यूतं स्याद्यागणेनैव तत स्तत्र निवेशयेत् ।
प्रागुक्तरचनाढ्यन्तु सुपूर्णं गन्धधारिणा ॥ ८ ॥

सप्तकं कलशानां तु मध्ये योज्यं तदग्निषु ।
अग्निभ्या मन्तरालस्थं दीपषट्कं यथा पुरा ॥ ९ ॥
कृत्वा मध्यमकुम्भे तु सांगं मन्त्रेश्वरं यजेत् ।
नमो नृसिंहभूतेभ्यः प्रणवाद्येन पूजयेत् ॥ २६० ॥
कोणेषु भगवद्भक्तनिचयं दोषनाशनम् ।
पूजयित्वा यथा न्यायं पुष्पधूपादिकेन वै ॥ १ ॥
दिग्बन्ध मथ वै कुर्या त्स्वास्त्रे स्सिद्धार्थकैः क्रमात् ।
ताडये दातुरं पश्चा दापादा न्मस्तकावधि ॥ २ ॥
स्वपाणिव्यजनेनाथ समाकृष्य विनिक्षिपेत् ।
दोषजालं च तद्दोषान् गगने वा धरातले ॥ ३ ॥
ततोऽग्निपात्र मादाय निर्धूममतिदीप्तिमत् ।
तस्मिन्निरिन्धने कुर्यात् होमं सिद्धार्थकैः क्रमात् ॥ ४ ॥
मूलम [ तिलैमं ] न्त्रेण चास्त्रेण शताष्टाधिकसंख्यया ।
अमुकं रक्ष रक्षेति स्वाहाशक्तिसमन्वितम् ॥ ५ ॥
मन्त्रान्ते तु पदं कुर्यात् भ्रामये न्मूर्ध्नि चाहुतिम् ।
महिषाक्षी मथादाय सिद्धार्थकसमन्विताम् ॥ ६ ॥
प्रजप्य धूपये त्सं वै कृत्वाच्छिन्नं तु वाससा ।
निधाय सजलं पात्र मग्निपात्रोपगन्ततः ॥ ७ ॥
नैवेद्यशेष मन्यस्मिन् सर्वं मुद्धृत्य सोदकम् ।
पशुप्रतिनिधिं चैव रंजितं कुंकुमादिना ॥ ८ ॥
ध्यात्वा श्रितानां दोषाणा म्मनसा परिकल्पितम् ।
यदीया चास्य वै बाधा इन्द्रियाणां च धातुषु ॥ ९ ॥
आदाय च बहिः शश्वत सिंहवक्त्रे [ द्ये ] तु मुंचतु ।
अन्तरान्तरयोगेन वामदक्षिणपाणिना ॥ २७० ॥

असंख्य माचरे द्धोमं पलियुक्तं मदक्षिणैः ।
चळिपाणि मथक्षाळ्य अस्त्रजप्तेन वारिणा ॥ १ ॥

भूतिमादायवैकुण्डा दधगोमय जन्तुवा ।
मजप्य यहुशोख्रेण स्ळाटादंघ्रिगोचरम् ॥ २ ॥

कार्याणिचोर्ध्वपुण्ड्राणि पृष्ठपार्श्वे द्वयेतुच ।
स्वस्त्यस्तुते [ स्वस्त्वाकृते ] युक्तेनाथ मन्त्रेणाघ्योंदकेनतु ॥३॥

मन्त्रकुम्भात्समेतेन विपुड्भिर्ह्लदयेदह ।
ध्यात्वापूर्णेन्दुगमन्त्रं पूर्णचन्द्रायुतोपमम् ॥ ४ ॥

प्रक्षरन्ध्रेणसाध्यस्य स्रवन्तममृतम्महत् ।
शरीरविटपन्तेन सेचयेच्चनखावधि ॥ ५ ॥

एवंकृत्वार्चयेद्भूयो मन्त्रमण्डलकुम्भगम् ।
कुम्भंतंशयनागारे ऊर्ध्वदेशेनिधायवै ॥ ६ ॥

वस्त्रपीठोपरिस्थन्तु च्छन्नंकृत्वातुवाससा ।
तत्रापिदिग्विदिक्स्थश्च दद्यात्पूर्णघटाष्टकम् ॥ ७ ॥

अच्छिन्नमसरन्धूपं दीपपात्रंघृतादिना ।
फलपुष्पौषधीदीप जालसिद्धार्थकन्दधौ ॥ ८ ॥

पात्रसंघन्तदयेतु कृत्वाचाथबलिंहरेत ।
निशामुखेतुसंप्राप्ते सर्वदोषप्रशान्तये ॥ ९ ॥

एकस्मिन्पैसमादाय पात्रेयत्कल्पितंविभोः ।
आपुष्पधूपदीपाद्य उपसंगृह्यपत्नतः ॥ २८० ॥

तद्भूतदत्तमन्यस्मिम् पण्णांवातत्पृथक्पृथक् ।
स्वदीपाळकृतंकृत्वा स्वकटोपरिविन्यसेत ॥ १ ॥

रक्षरक्षपदोपेतं मन्त्र मस्त्र युतंस्मरेत् ।
रक्ष्यस्य शिरसिभ्राम्य यथादत्तं क्रमेणतु ॥ २ ॥

सत्वशुद्धां स्तथा भूयो मद्भक्तान् वलिवाहकान् ।
मन्त्राभिमन्त्रितं दद्या त्तेषां सिद्धार्थकं करे ॥ ३ ॥
प्रजप्य भस्मना कुर्या ल्ललाटे तिलकन्तु वै ।
प्रवाहये द्बलिं मन्त्री ह्यगाधे म्भसि वै पुरा ॥ ४ ॥
चत्वरे वृक्षमूलेथ ग्रामा द्वा नगरा द्बहिः ।
देवभूतबलिक्षेपो विहित श्चात्रकर्मणि ॥ ५ ॥
धूमायन्तंच सिद्धार्थैं र्वह्निपात्रं पुरोदितम् ।
तेनैव बलिपात्रेण सोदकेन समन्वितम् ॥ ६ ॥
त्यजेत् कूपसमीपे तु वाप्यां वा निकटे तरोः ।
बलं क्षिप्त्वा समाचम्य धौतांघ्रिकरपल्लवः ॥ ७ ॥
रक्ष्यावनौ सुलिप्तायां परित श्शोधितस्य च ।
तन्मूर्ध्नि दीपपात्रैश्च सिद्धार्थक्षेप माचरेत् ॥ ८ ॥
प्रजप्य बहुशो स्त्रेण मूलसम्पुटितेन च ।
बध्नीया त्समरात्रन्तु प्रत्यहं तस्य चाम्बरे ॥ ९ ॥
कृतेनानेन विधिना पीडितानां सदैवहि ।
रक्षणं रसधातूनां शश्वदेवहिजायते ॥ २९० ॥
ततः प्रलिप्तेविमले कुशाजिन समावृते ।
कृतन्यास स्स्वयन्तिष्ठे द्रक्ष्यागारे सहायवान् ॥ १ ॥
पयोभुग्वानिराहारो ध्यानजप्य परायणः ।
आदिमध्यावसानस्थं रात्रंशेषु समाचरेत् ॥ २ ॥
पूजनंवह्नसम्य ग्बलिदान समन्वितम् ।
सक्तुना सोदकेनैव मधुनाथ घृतेनच ॥ ३ ॥
पूर्वभागेतु यामिन्या मतीतो विहितोबलिः ।
यवगोधुमशाल्युत्थ चूर्णैसगुडाम्भसा ॥ ४ ॥
त्रिप्रकाराणि संवर्त्य मोदकानितुपाणिना ।
वृत्तदीपशिखाकारे स्तुल्यान्याम्रफलस्यच ॥ ५ ॥
क्षीरयुक्तैरपक्वैस्तै र्मध्यरात्रयां बलिंहरेत् ।
सुमर्दितै स्तिलै कृष्णै र्बीजैःपाकविवर्जितैः ॥ ६ ॥

तण्डुलै रजनीचूर्णै र्दभैर्दूर्वांकुरैः फलैः ।
व्यतीतायान्तु शर्वर्या यागरक्षागृहाद्बहिः ॥ ७ ॥
मार्गैकदेशे निक्षिप्य चत्वरेवापि शोधिते ।
अथाभिमन्त्र्यबीजानि समधान्यानिमङ्गके ॥ ८ ॥
दत्वाद्विजेन्द्र कन्याया तत्सकाशा त्समाहरेत् ।
तिस्रःप्रसृतयःपात्र एकस्मि न्सप्तचापरे ॥ ९ ॥
एकादश ततोन्यस्मि न्यदेपात्रत्रयन्ततः ।
अस्त्रसम्पुटितेनैव सिद्धबीजेन मन्त्रवित् ॥ ३०० ॥
शतमष्टाधिकञ्चैव द्विगुणं त्रिगुणंक्रमात् ।
तेनतोयघटानान्तु उद्धृत्यो द्धृत्यनिक्षिपेत् ॥ १ ॥
एकस्यद्वे जलेचान्ये प्रातर्मध्य न्दिनक्षये ।
आसमाप्ते रिदंकुर्या त्सामान्य भूततर्पणं ॥ २ ॥
ततोपरस्मिन्नहनि इष्टामन्त्रन्तु मण्डले ।
हुत्वायथाविधानेन दत्वापूर्णाहुतिन्तुवै ॥ ३ ॥
सितेनशालिचूर्णेन अष्टाश्र मण्डलं लिखेत् ।
तन्मध्येशरत्समध्यस्थं कमलं लिख्यषड्दलम् ॥ ४ ॥
दद्याद्ध्वजाष्टकं बाह्ये मार्गदीप समन्वितम् ।
अवतार्यचतन्मध्ये रक्षाकुम्भ शिरास्थितम् ॥ ५ ॥
अपनीयपुरातस्मा दुष्पमाल्यानुलेपनम् ।
शीतलोदकधाराश्च पूरणार्थपराक्षिपेत् ॥ ६ ॥
यथायथाक्षयंयाति तत्रस्थमुदकन्तुवै ।
तथातथाभवेद्वृद्धी रक्षस्या स्त्रिलधातुषु ॥ ७ ॥
स्रग्वस्त्राद्यानुलेपाद्यै र्नेवकृत्वार्थितन्तुतम् ।
ततः स्तम्पूज्य तन्मध्ये गन्धनाथ यथा पुरा ॥ ८ ॥
रक्तपातो भवेद्येन नृणा मुपचयो महान् ।
मन्त्रदत्तेन सुरभि नैवेद्येनाथ तर्पयेत् ॥ ९ ॥

अर्घ्यं पुष्पं रजो धूप दीप यन्मन्त्रयोजितम् ।
तत्सर्व मुपसंहृत्य नित्य मम्भसि निक्षिपेत् ॥ ३१० ॥
शेषस्य विनियोगन्तु प्रागुक्तं सर्व माचरेत् ।
द्वितीयेऽह्नि तत. कुर्या च्चतुरश्र तु मण्डलम् ॥ १ ॥
षट्कोणचैव तन्मध्ये पुर मालिख्य साम्बुजम् ।
तत्र कुम्भसमूहन्तु तस्मा द्दीपान्तरीकृतम् ॥ २ ॥
इष्ट्वातु मन्त्रदत्तेन तर्पये द्ब्राह्मणा स्तु वै ।
वृत्तमण्डलमध्येतु चतुर्थेऽहनि सल्लिखेत् ॥ ३ ॥
अष्टार दीप्तिमच्चक्र वह्निवेश्म तदन्तरे ।
तत्रेष्ट्वा मन्त्रमूर्तिन्तु कृत्वा रक्षा यथा पुरा ॥ ४ ॥
द्विजेन्द्रजा कुमारी च तथा ब्राह्मणदारिकाः ।
पूजयित्वा यथा न्याय ताभ्या यच्छे च्चिवेदितम् ॥ ५ ॥
अथाष्टकोण कुर्वीत मण्डल पञ्चमे ऽहनि ।
शख तदन्तरे कुर्या च्चक्रस्योदरग लिखेत् ॥ ६ ॥
स्नानाभिषेकोपचार जातावास च दैतिराट् ।
सकुम्भानां च दीपाना माक्रम्य विनियोजनम् ॥ ७ ॥
विविधै पूजये देव नैवेद्यै कुसुमादिकै ।
देवोपभुक्त मन्नन्तु क्षिप्त्वा प्रागुक्त माचरेत् ॥ ८ ॥
अथ षष्ठ दिने कुर्या त्रिकोणभुवनान्तरे ।
सप्तारन्तु महाचक्र सप्तकोणमप हि यत् ॥ ९ ॥
तदन्तरे च तद्दिक्षु गदाद्वन्द्वद्वय लिखेत् ।
तन्मध्ये तद्घटान्तस्स्य यजे न्मन्त्र यथाविधि ॥ ३२० ॥
इष्ट्वा नैवेद्य मादाय उच्चस्थाने निधाय तत् ।
उपभोग याति चैव वायसादेः खेचरेषु च ॥ १ ॥
चतुरश्र चतुर्द्वार मण्डल सप्तमेऽहनि ।
कुर्या त्कोणचतुष्केतु लिखे च्चक्रचतुष्टयम् ॥ २ ॥

तत्र मध्ये लिखे त्पद्म-मसंख्यदळभूषितम् ।
तत्कर्णिकाश्रितं चक्रं द्वादशारं विलिख्य च ॥ ३ ॥
अष्टदिक्ष्वष्टकं दद्या त्कलशानां सदीपकम् ।
तत्र षट्दिवसोर्ध्वन्तु विनियोगं समाचरेत ॥ ४ ॥
नैवेद्यस्य च मन्त्रज्ञो दक्षिणाभि स्समन्वितम् ।
एवं मांसादिधातूनां क्रमा दुपचयो भवेत ॥ ५ ॥
महिषो जोगुडं चैव हरिण श्शशक स्तथा ।
मयूर श्चकषाकस्तु समाहं सप्तकन्तु वै ॥ ६ ॥
देवं ध्यात्वाश्रितानांतु सत्वानां पिशिताशिनाम् ।
रक्षार्थमिष्टिस्सम्पाद्यं नसजीवंहि जंगमम् ॥ ७ ॥
स्वार्थतो वा परार्थेन श्रेयसेभिनिवेशिना ।
प्राणिहिंसा न कार्या वै विशेषा ज्जीवितैषिणाम् ॥ ८ ॥
आयुषः क्षय मायाति नूनं प्राणिवधा न्नृणाम् ।
भूताभयप्रदानेन आयुषो वृद्धि माप्नुयात् ॥ ९ ॥
आयु रारोग्य मैश्वर्य मपमृत्युजय स्महत् ।
बल मोजो धृति धैर्यं स्या न्मन्त्रा त्सपरायुषः ॥ १३० ॥
मन्त्रपूजा जपो होमो दानं हेमगवादिनाम् ।
ऐहिकामुष्मिकीं वृद्धिं सत्वस्थानां करोति च ॥ १ ॥
मण्डलस्थं ततः क्षिप्रं प्रवीते सप्तमे दिने ।
रजांसि बलयो धान्य स्नाग्व दादाय सन्त्यजेत् ॥ २ ॥
इति रक्षाविधानन्तु स्वरुजाना मुदाहृतम् ।
निरुजानां विशेषेण रक्षणं भोगसेविनाम् ॥ ३ ॥
क्रियारतानां भक्तानां आस्तिकानां हितैषिणाम् ।
कार्यं क्रियापरेणैव मन्त्रज्ञेन सदैवहि ॥ ४ ॥
यत्नेन विधानेन शरीरमपि रक्ष्यते ।
तत्र भूताः प्रयच्छन्ति कल्याणं सार्वकामिकम् ॥ ५ ॥

अथ सन्धारणीं रक्षां वक्ष्ये विग्रहभूषणम् ।
या सम्पन्ने क्रियामाने धारणादेव रक्षति ॥ ६ ॥
प्रणवाद्यन्तसंरुद्ध साध्यसञ्ज्ञापदं लिखेत् ।
रक्षवीप्सापदोपेत पत्रसन्धिषु पटस्वथ ॥ ७ ॥
द्वादशारं बहिश्चक्र नाभिनेमियुतं लिखेत् ।
नाभे रष्टमबीजं य सदरे प्वन्तरान्यसेत् ॥ ८ ॥
सप्तमा द्दशमं याव द्वर्णपिण्डाक्षराष्टकम् ।
क्रमेण भेदये च्छेषै स्वदराणे स्सबिन्दुकैः ॥ ९ ॥
जहि वीप्सापदं दोषा नमुकस्येति विन्यसेत् ।
सर्वेषा मन्तरालेषु अस्त्रमन्त्रन्तु पूर्ववत् ॥ ३४० ॥
अमुकं पाहि पाहीति द्वादशाक्षरमध्यगम् ।
चक्रनाभौतु विन्यस्य नेमिदेशे तथैवहि ॥ १ ॥
क्रमा दथ बहि र्लेख्या मन्त्रचक्रस्य यत्नत ।
वृत्तत्रयश्चार्धचन्द्राणि चतुरश्रपुराणि च ॥ २ ॥
बिन्दुस्वस्तिककल्हार वज्रसलाञ्छितानि च ।
नाभिपूर्वद्वितीयेन चतुर्थेन तदादिना ॥ ३ ॥
क्रमा द्वर्णचतुष्केन तानि युक्तानि कारयेत् ।
सषष्ठेन बीजेन नामरक्षपदानुगम् ॥ ४ ॥
सम्पुटीकृत्य वृत्ताख्य मण्डलं परिपूरयेत् ।
द्वादशार्णेन बाह्यस्थ तृतीयं पूर्वं पूर्ववत् ॥ ५ ॥
द्वितीयं वा चतुर्थन्तु बहि दिक्स्वष्टके क्रमात् ।
रक्षावीप्सापदोपेतं नामधर्ज नियोजयेत् ॥ ६ ॥
सह गोरोचना योज्या कर्पूर कुङ्कुमन्तु वै ।
क्षीरेणकापिलेनाथ तद्गोमयरसेनच ॥ ७ ॥
निशाम्बुनासमालोड्य निम्नगा सलिलेनवा ।
विलिख्यभूर्जपत्रेवा बर्हिपक्षेण वासने [रे]॥ ८ ॥

शुभेनुकूलेनक्षत्रे सुलग्नेभ्युदितेगृहे ।
पूज्यसंवेष्टयसूत्रेण ततरसद्धातुनानुवे ॥ ९ ॥
सन्धार्यामूर्ध्निकण्ठेवा सततं दक्षिणे भुजे ।
दैवदोषवियुक्तस्तु वर्द्धतेशोकवर्जितः ॥ ३५० ॥
आधिभूतै र्भयैर्मुक्तो यावज्जीवं हि तिष्ठति ।
परार्थतोवास्वार्थेन कृतकृत्योयदाभवेत ॥ १ ॥
दोषवान् शान्तिदेनैव कर्मणानेनसाधुना ।
मन्त्रीतदामन्त्रवरं प्रयत्नेन क्षमापयेत् ॥ २ ॥
सिद्ध्यर्थमन्यसिद्धीनां यागहोम जपादिना ।
अथमन्त्रवराद्धर्म साधनंयोभिवांछति ॥ ३ ॥
तस्मात्तर्पेविधानंच संक्षेपादवधारय ।
पितॄणां लुप्तपिण्डानां पिण्डनिर्वापणायच ॥ ४ ॥
प्रीतयेपि जगद्धातुः परित्राणार्थमात्मनः ।
कृतोपवासोमावास्या स्मण्डलान्तर्गतं विभुम् ॥५॥
आवाह्यपूर्वविधिना योजयेद्भक्तिपूर्वकम् ।
पाद्यार्घ्य पुष्पधूपैस्तु दानैर्हेमगवादिकैः ॥ ६ ॥
तिलयुक्तैस्तु नैवेद्ये स्वकुशैस्तु तिलान्वितैः ।
विमलैरम्बुपात्रैश्च स्वयमञ्जलिपूरकैः ॥ ७ ॥
सोचिरान्मन्त्र मूर्तेर्वै प्रासादाच्छाश्वतंपदम् ।
प्राप्नोतिनरकस्थांश्च पितॄनपिनयेद्दिवम् ॥ ८ ॥
पत्रपुष्पफलाद्याद्य स्तरयदद्ध्योदनादिना ।
रत्नैरत्नैश्चसद्गन्धै र्वस्त्रोत्कृष्टैस्तु धातुभिः ॥ ९ ॥
प्रवाळमुक्तामाणिक्यै र्भक्त्याचविभवेषति ।
बिम्बस्थम्मण्डलस्थंवा सर्वेयो मन्त्रिराड्यजेत्॥ ३६० ॥
षष्टीति सुरोत्थायां पूर्णायां सोपवासकः ।
यष्टधर्म फळाकांक्षी सनून्तदवाप्नुयात् ॥ १ ॥

योहिवांछतिसद्धर्मं तीर्थाभि गमनम्मद्गत् ।
सयथाथात्क्रमात्पूर्वं म्मण्डलेमन्त्रराड्यजेत् ॥ २ ॥
ततस्सम्भृतसम्भार स्स्नानपूर्वं समर्चयेत् ।
सिद्धप्रतिष्ठितंबिम्बं सैद्धंवाथस्वयंकृतम् ॥ ३ ॥
पञ्चगव्यदधिक्षीर घृतमध्विक्षुवारिभिः ।
सर्वोषधीगन्धरत्न फलपुष्पान्वितैर्घटैः ॥ ४ ॥
सांगेनामन्त्र्यमन्त्रेण शताष्टफलपूरितैः ।
अन्तरीकृतशुद्धांभः कुम्भैरर्घ्यसमन्वितैः ॥ ५ ॥
श्रद्धापूतेनमनसा एवंनिष्पाद्यतेयदि ।
प्रसादं मन्त्रनाथस्य प्राप्नुतमचिराल्लभेत ॥ ६ ॥
संक्रान्त्यां सोपवासस्तु मण्डलेमन्त्रनायकम् ।
समावाह्ययजेद्यस्तु फलपुष्पैर्यथर्तुजैः ॥ ७॥
सप्ताहंफलमूलाशी त्रिकालंस्नानतत्परः ।
बहुशोष्टांगपातैस्तु प्रदक्षिणसमन्वितैः ॥ ८॥
सनूनंसमवाप्नोति ह्याश्वयस्तद्भवोद्भवम् ।
अयाभिमतदानाद्वै योधर्ममभिवांच्छति ॥ ९ ॥
विष्टपस्थदिनंप्राप्य सोपवासस्तुसंयतः ।
अभिसन्धायमनसा धर्मदानादभीप्सितम् ॥ ३७० ॥
निर्वर्त्यमण्डलंरम्य मग्रयगारसमन्वितम् ।
गौसम्भवैस्तु नैवेद्यै भक्ष्यैस्स्वफलमूलकैः ॥ १ ॥
स्रग्वरैर्धूपदीपैस्तु तिलैर्हेमांबुभाजनैः ।
सम्यगिष्ट्वाथसन्तर्प्य ज्वलनान्तर्गतन्ततः ॥ २ ॥
समिद्भिराज्येनतिलै स्सघृतैस्तण्डुलान्वितैः ।
तयोभिवर्धतेधर्मो मूर्तादानाच्छताधिकम् ॥ ३ ॥
दक्षिणेवायनेवाथ शुभंनिर्वर्त्यमण्डलम् ।
मन्त्रनाथन्तुचावाह्य विधिनासंयजेत्ततः ॥ ४ ॥

माल्यैर्विलेपनैर्धूपै र्महादीपैर्घृतादिकैः ।
गुडखण्डचितैर्भक्ष्यैः पयसाकृसरेणतु ॥ ५ ॥
नाळिकेरोदकेनैव सक्तुनाचघृतेनच ।
सन्तर्प्यहुतभुङ्मध्ये मन्त्रमाज्यादिकैस्ततः ॥ ६ ॥
विधिनानेनवैधर्म मिष्टापूर्तमवाप्यते ।
च्चन्द्रसूर्योपरागेचा प्यहोरात्रोषितश्शुचिः ॥ ७ ॥
सर्वोपकरणोपेत मादौनिर्वर्त्यमण्डलम् ।
न्यस्य मन्त्रवरंतत्र विभवेनयजेत्ततः ॥ ८ ॥
सन्तर्प्यवह्निमध्येथ समिद्भिर्वाघृतादिकैः ।
जपेन्मन्त्रवरंपश्चा न्मनसाध्यानसंयुतम् ॥ ९ ॥
अक्षसूत्रकरोमन्त्री यावच्चन्द्रार्कदर्शनम् ।
पूजाहोमजपानाञ्च फलानन्त्यमवाप्नुयात् ॥ ३८० ॥
भक्तानामर्थहीनानां मन्त्रैकनियतात्मनां ।
साधनांग विहीनानां फलेप्सुनामिदंस्मृतम् ॥ १ ॥
ध्यानाद्ध्यानात्तथायोगा ज्जपाद्धोमाच्चसद्व्रतात् ।
सदन्नपानाद्दानाच्च सर्वलोपाच्चसामयात् ॥ २ ॥
धर्मसाधनमित्युक्तं भावितानांविशेषतः ।
यथार्थं साधनम्मन्त्रा दभिवाञ्छति योचिरात् ॥ ३ ॥
ब्रह्मचारीगृहस्थोवा वानप्रस्थोथवायतिः ।
कृत्वायागं यथासम्य क्समाहितत्र मन्त्रराट् ॥ ४ ॥
यजेत्सविभवेनैव भिक्षापीनक्तभोजनः ।
त्रैकाल्यंहुतभुङ्मध्ये सन्तर्प्याज्येन कालजैः ॥ ५ ॥
बिल्वैरामलकैःपद्मै स्तदभावे कुशांकुरैः ।
यइच्छेत्तस्यकालन्तु मन्त्रम्मन्त्रेश्वरात्फलम् ॥ ६ ॥
वैशाख्येहि सितेतेन सौम्यश्रवणसंयुते ।
सोपवासेनकर्तव्यं मन्त्रेशस्यार्चनम्महद् ॥ ७ ॥
स्थण्डिलेवामण्डलेबिम्बे साम्भःकुम्भेथवाततः ।

दक्षिणोत्तरपादाभ्यां मन्त्रनाथस्यपूजयेत ॥ ८ ॥
गङ्गांच यमुनांचैव नातिनामणवेनतु ।
तदंघ्रिजलमिश्रेन घटमापूर्यचाम्भसा ॥ ९ ॥
अलंकृत्ययथाशोभं पुष्पवस्त्रानुलेपनैः ।
विनिवेश्यचतद्रक्रे तिलहोमफलान्वितः ॥३९८॥
मध्वाज्यशर्कराद्येन पूर्णदध्योदनानिच ।
महापूर्णघटश्चैव पात्रंचावेदलन्ततः ॥ १ ॥
निवेद्यमन्त्रमूर्तौमा क्षद्रुपानहसंयुतम् ।
तत्रातपत्रसहितं पात्रमाहूयवैततः ॥ २ ॥
स्रक्चन्दनार्घ्यं धूपैस्तु समलंकृत्यवाससा ।
मन्त्रेणार्घ्योदकं पाणौ दत्वा वदन्तु तद्घटम् ॥ ३ ॥
प्रतिपाद्य जगद्योनेः प्रीत्यर्थ मपि तेन वै ।
प्रसक्तेन परां प्रीतिं याच्यो मन्त्री महामते ॥ ४ ॥
एवमेव प्रपन्नाये नारायण मनामयम् ।
वर्णा ब्राह्मणपूर्वेतु ते स्वदुष्कृतशान्तये ॥ ५ ॥
स्नात्वाभ्यर्च्य पितॄन् देवान् सन्नदीभ्यां तु संगमे ।
स्नानाभि मवतीर्याथ विमलांजलिपूरकैः ॥ ६ ॥
निर्वर्त्य भगवद्यागं दद्या द्विप्रवराय च ।
आप्यर्थ विबुधानां च सर्वलोकनिवासिनाम् ॥ ७ ॥
पितॄणां स्वकुलोत्थानां सततं श्राद्धकाङ्क्षिणाम् ।
श्वेतद्वीपाप्तये चैव वृद्ध्यर्थं च स्वसन्ततेः ॥ ८ ॥
आस्तां सितासिता चैव द्वादशी त्वमलेक्षण ।
भगवद्भावपूतानां या काचि दपरा तिथिः ॥ ९ ॥
साच वै श्रवणोपेता युताचाभिजितातु वै ।
सा तेषा मंगभावंच याति सर्वफलाप्तये ॥४००॥
तस्मा त्कृतोपवासस्तु तस्या मभ्यर्च्य मन्त्रराट् ।
विभवेनाथवा शक्त्या मन्त्रं शान्त्याप्यसिद्धये ॥ १ ॥

यानि यानीह दानानि गोभूहेमादिकानि च ।
दत्तानि चानुरूपाणि जनानां कृतकर्मणाम् ॥ २ ॥
फलदानि च दातॄणां भवदारुकुठाराणि च ।
सम्यक्दत्तानि यान्येव भक्तानां भावितात्मनाम् ॥ ३ ॥
भगवत्पादलिप्सूनां भवन्ति भवशान्तये ।
अपि यद्यदिदं तावद्यस्तवच्याच्युतो हरिः ॥४॥
विष्णु र्नारायणो हंस स्सर्वशक्तिमयः प्रभु ।
द्रव्यात्मना विभक्तश्च ज्ञातव्यो ज्ञानकर्मणि ॥ ५ ॥
त्रिविधेन तु भेदेन बुद्बुदेभ्यो यथाम्बुधिः ।
एष दानं स्व मात्मानं पात्रं नारायणात्मकम् ॥ ६ ॥
बुध्वा सामान्यबुध्या स पुन स्तास्त्रिविधं पृथक् ।
सविशेषं परिज्ञेयं दानकाले ह्युपस्थिते ॥ ७ ॥
उपायलक्षण द्रव्य मभ्यूह्यादौ स्वचेतसा ।
अनन्तशक्ते स्सामर्थ्य मिदं किंचि दनश्वरम् ॥ ८ ॥
दानाभिमानदेहस्तु प्रत्यगात्मा त्वहं प्रभुः ।
पात्रभावाय मापन्नो मदनुग्रहकाम्यया ॥ ९ ॥
देवः पचतनु स्साक्षा त्पंच भूतात्मना स्थितम् ।
ज्ञात्वैव द्वादशार्णेन स्वेन वा न्यस्तविग्रहः ॥२१०॥
प्राप्यं मन्त्र मालभ्य द्रव्यहोमादिक ततः ।
स्वरूप मजह द्ध्याये न्महद्गिमकदम्बवत् ॥ १ ॥
अमन्त्रेण यजे त्पश्चा दर्घ्यपुष्पानुलेपनैः ।
षियद्विषट्पमन्त्रेण स्वकेनागोज्झितेन वै ॥ २ ॥
सकली करण कुर्या त्पात्रभूते परात्मनः ।
स मर्घपाद्य विधिव द्वस्त्रस्रगनुलेपनैः ॥ ३ ॥
भगवत्प्रीतिपूर्वन्तु दान दद्याच्च सोदकम् ।
तेनापि प्रीणनं कार्यं भ ारद्वाविनात्मना ॥ ४ ॥

दानं ज्ञानात्मतां येन मयात्यच्युतवेदिनाम् ।
नारायणपरं ब्रह्म प्रतिशब्दत्व मागतः ॥ ५ ॥
संसारानलतप्तानां भक्तानां मोहशान्तये ।
अत स्तस्य स्वमन्त्रेण मूर्तिदानं समाचरेत् ॥ ६ ॥
द्वादशाक्षरपूर्वेण त्वथवान्येन केनचित ।
अनन्तं स्वमदं स्वेषं क्रोडीकृत्य तदात्मना ॥ ७ ॥
समर्चनीय विधिव न्मन्त्राकृति यथा सदा ।
एवं दानप्रदानेन यजे न्मन्त्रात्मना परम् ॥ ८ ॥
महन्मन्त्रात्मना चैव पुन स्सद्व्रतसिद्धये ।
ब्रह्म स्वमेति वै येन व्रतिना मनव व्रतम् ॥ ९ ॥
अनेन भेदभिन्नं च सदानं दापदार्थिनाम् ।
तपो यज्ञं हि विधिवत् ब्रह्म भावनयार्चयेत् ॥ ४२० ॥
यथास्यां मोक्षफलद मचिरा द्विष्णुयाचना ।
नानाद्रव्यांगदेहं य यज्ञं चानेकलक्षणम् ॥ १ ॥
मूर्ततां यज्ञमन्त्रेण नीत्वैवं प्राक्समर्चयेत ।
जुहुया दाखमापयन्तं पूर्णान्ते मोह [क्ष?] मृच्छति ॥ २॥
दानानां च व्रतानां च तपसां यज्ञकर्मणाम् ।
निवेदितव्यं यद्द्रव्यं दत्तं वा यत्र यत्पुरा ॥ ३ ॥
कर्तव्य मनुयागार्थ माश्रतदेव हि केवलम् ।
तद्भावित मतोऽश्रीया त्पावनं प्रापणान्वितम् ॥ ४ ॥
भवे त्त्रिरात्रे फलदं भक्तानां शुभकारिणाम् ।
किं पुनस्तु समर्थानां चोदनाश्रयिणां तु वै ॥ ५ ॥
दानधर्मरतानां च व्रतिनां यज्ञयाजिनाम् ।
परत्र भयभीरूणा मल्पपानां शुभार्थिनाम् ॥ ६ ॥
शमीपलाशश्री [?]क्षै स्समिद्भि श्चामलद्रुमैः ।
अम्भसा चान्वुनध्येच मन्त्रंतर्पण माचरेत् ॥ ७ ॥

समाहि समर्तातेतु मन्त्र मुत्थाप्य मण्डलात् ।
ध्यानयुक्तं जपं कुर्या लक्षसंख्यं समाहितः ॥ ८ ॥
ब्रह्मचर्यस्थितो मौनी दुष्टा हार्यविवर्जितः ।
क्षारारनाळतैळानां परित्यागी ह्यलोलुपः ॥ ९ ॥
नित्यं कुशाजिने शायी मान मात्सर्यवर्जितः ।
तप्तहाटकसंकाशं परिभ्रमणविग्रहम् ॥ ४३० ॥
भूरिधारासमाकीर्णं चक्र मग्रे खगं स्मरेत् ।
तन्नाभिसंस्थितं मन्त्र मचलं चैव सम्मुखम् ॥ १ ॥
नानारत्नप्रभाकान्ति मुद्गिरन्तं स्वविग्रहात् ।
हेमाद्रिधातुनिचयं चन्द्रकान्तादिसन्मणीन् ॥ २ ॥
एवं ध्याये जपे च्चापि पूजये दन्तरान्तरा ।
नियमा दाप्तमाप्येव जपान्ते वित्तप स्स्वयम् ॥ ३ ॥
आज्ञावश्यो विधेय स्स्या दात्मना च धनेन च ।
प्रयच्छत्यर्थिनां कामं भुङ्क्ते सो ऽविरतं स्वयम् ॥ ४ ॥
आयुरारोग्यसंयुक्तो मन्त्रेशस्य प्रभावतः ।
प्रवर्ततेर्थयुक्तानां काम आशुचभोगिनाम् ॥ ५ ॥
तत्साधन मथो वक्ष्ये साधकानां हिताय च ।
मण्डलंपूर्ववत्कृत्वा शुचौदेशेमनोरमे ॥ ६ ॥
संपूजितत्रमन्त्रेश समाहूयचसंयजेत् ।
त्रिरात्रंसप्तरात्रंवा जुहुयात्तदनन्तरम् ॥ ७ ॥
प्रागुक्तेनविधानेन जपध्यानेसमाचरेत् ।
सर्वाधारमरिन्ध्यायेत् पद्मरागरुचामदव् ॥ ८ ॥
तन्मध्येविद्रुमाभंच बन्धुजीवनिभोज्वलन् ।
ध्यायेन्मन्त्रवरंमन्त्री जपंपूर्वोक्तसंख्यया ॥ ९ ॥
स्त्रीभोगंचेतसःकृत्वा जपान्तेसाधकस्ततः ।
प्रार्थयन्तेप्रभीताश्च सन्ततमागदविह्वलाः ॥ ४४० ॥

देवकिन्नरनार्यस्तु यक्षगन्धर्वकन्यकाः ।
सिद्धास्सुरांगनाश्चान्या नरनागस्त्रियोखिलाः ॥ १ ॥
आजीवावधिवैसम्य कर्मणामनसागिरा ।
सेवन्तेसाधकेन्द्रन्तं मन्त्रस्यास्यप्रभावतः ॥ २ ॥
यंयंसमीहतेकामं पाताळोतिष्ठपूर्वकम् ।
लक्षजापास्तथाहोमा संतंयच्छतिमन्त्रराट् ॥ ३ ॥
अथकामोपभोगात्तु विरतस्यचमन्त्रिणः ।
मोक्षदंसंप्रदायंच कथयिष्येयथार्थतः ॥ ४ ॥
कृत्वायागवरंभूयः प्रसन्नेनान्तरात्मना ।
पूर्वोक्तन्तु यजेत्काळे तत्रमन्त्रवरंक्रमात् ॥ ५ ॥
तर्पयित्वाविधानेन कुण्डेवाथजलेम्भसा ।
सर्वदोषनिवृत्यर्थं प्रायश्चित्तार्थमेवच ॥ ६ ॥
जपेदयुतमेकन्तु प्रागुक्तंवास्वशक्तितः ।
हृत्पुण्टरीकमध्येथ स्मरेन्मन्त्रंसमाहितः ॥ ७ ॥
रोमकूपगणैस्सर्वैः रत्नज्वाळाशतावृतम् ।
तन्मयश्चस्वचैतन्यं कृत्वातद्वह्निरश्मिभिः ॥ ८ ॥
भूतदेहंदहेत्कृत्स्नं तद्वियुक्तश्चसांप्रतम् ।
मार्ताण्डइवपक्षीशा आस्तेमन्त्रस्वरूपधृक् ॥ ९ ॥
अथमन्त्राकृतिरसौवै ध्यायेत्परिणतंशनैः ।
तेजोगोळकसंकाशं सर्वांगावयवोज्झितम् ॥४५०॥
तत्तेजोगोळकपश्चा दृहत्परिमितन्त्वपि ।
सर्वंगंशब्दरूपञ्च भावरूपन्तुचिन्मयम् ॥ १ ॥
तस्मादप्यभिमानन्तु ह्यस्मिताख्यं शनैश्शनैः ।
विनिवार्ययथाशश्वत् ब्रह्मसम्पद्यतेस्वयम् ॥ २ ॥
इत्येवं वैभवीयस्य नृसिंहस्यमहात्मनः ।
आराधनंच सर्वेषा मुक्तंसिद्धिसमन्वितम् ॥ ३ ॥

नित्यक्रियापराणांच संसारोद्विग्नचेतसाम् ।
मद्भक्तानामिदंवाच्यं शुद्धानां संयतात्मनाम् ॥ ५५४॥

इतिश्रीपांचरात्रे श्रीसात्वतसंहितायां वैभवीयनृसिंहकल्पो नाम

सप्तदशः परिच्छेदः ॥ १७ ॥

## अथ अष्टादशः परिच्छेदः ।

नारद- ।

एवमुक्तेसतिपुनः कामपालोमुनीश्वराः ।
उवाचेदं हरिं वाक्यं लोकानुग्रह काम्यया ॥ १ ॥

संकर्षणः ।

सम्प्राप्त प्रत्ययानांच द्विजातीनांच साम्प्रतम् ।
सम्यग्प्रक्षीण पापाना मारूढाना मिहक्रमे ॥२॥
दीक्षात्रयस्य भगवन् ज्ञातुमिच्छामि निर्णयम् ।
यत्प्राप्य भगवद्भक्तः कृतकृत्यो चिराद्भवेत् ॥ ३ ॥

भगवान् ।

शुभेनुकूले नक्षत्रे तिथौ लग्ने गृहेक्षिते ।
भक्ताना मधि वासार्थं क्ष्मापरिग्रहमाचरेत् ॥ ४ ॥
पुण्येदेशेनुकूलेच मनोज्ञे साधुसेविते ।
मृद्वारिफलपुष्पाढ्ये समित्कुश समन्विते ॥ ५ ॥
गोसस्यशालि सुभगे क्षुद्रप्राणि विवर्जिते ।
तत्र वर्णानुरूपांक्ष्मां गच्छेत्पूर्वोक्तलक्षणाम् ॥ ६ ॥

सर्वदोषविनिर्मुक्तां सत्पक्षि मृग सेविताम् ।
या शुभायतनोद्देशे मठैर्गोष्ठापणैर्गृहैः ॥ ७ ॥
तोयाशयाश्रमैः क्षेत्रैः सद्वृत्तै रन्तरीकृता ।
जलौघभयनिर्मुक्ता वल्लादुक्ताच सज्जनैः ॥ ८ ॥
घनैरुपवनैर्ग्रामै नगरागै स्समावृता ।
अलाभेस्तितिलाभेवा, स्वभूमे र्ब्राह्मणादिषु ॥ ९ ॥
स्वमन्त्रेणार्चनास्त्वत्वं कुर्यां द्वर्ण व्यपेक्षया ।
उद्धृतां कृतखाताच ज्ञात्वादोषोज्झिताम्पुरा ॥ १० ॥
शुभमृत्पूरितां कृत्वा लघ्वग्मभि रथान्तरा ।
ततस्ताकुट्टयेत्पश्चा त्पचगव्येन सेचयेत् ॥ ११ ॥
मुक्ताहेमादिसद्रत्नै स्समीकृत्योपलिप्यच ।
तत्रार्चन विभो कुर्यात् ध्यानान्तचैवपूर्ववत ॥ १२ ॥
भूताना बलिदानच सुरभीणाच तर्पण ।
द्विजानां दक्षिणान्तवै ततस्तत्र समापयेत् ॥ १३ ॥
प्राग्दिक्षु सिद्धिपूर्वन्तु मण्टप मण्डनान्वितम् ।
सुस्तम्भद्वितयेनैव कोणगेनोपशोभितम् ॥ १४ ॥
पार्थिवेनच पीठेन मध्यगेनविराजितम् ।
विस्तरात् द्विजादीना शूद्रान्तानां समस्मृतम् ॥ १५ ॥
अष्टाश्रमथवावृत्त तुर्याश्रसोपपीठकम् ।
अष्टाङ्गुळा स्समुत्सेधा देवापायेन लक्षितम् ॥ १६ ॥
स्वोन्नार्यर्थनोपपीठ सर्वेषा परिकल्पयेत् ।
विस्तारमुपपीठाना पीठोच्छ्रायाद्द्विसद्गुणम् ॥ १७ ॥
उपपीठस्यसलग्ना तन्मानेनतु चोन्नता ।
आप्यदिक्साग्रहस्ताच सम्पाद्यासनपिण्टिका ॥ १८ ॥
नैवेद्यमुपपीठेतु विनिवेद्यनिधायच ।
तदद्दक्षिणादिग्भागे त्वन्तर्गमनसयुतम् ॥ १९ ॥

विविक्तलोचनोपेतं पिण्डिकाकुण्डभूषितम् ।
सुकवाटार्गळोपेतं कुर्याद्धवनमण्टपम् ॥ २० ॥
उपलिप्यास्त्रजप्तेन वारिणागोमयेनतु ।
विधिवच्छोभनंकुर्या दित्येवंमण्टपद्वयम् ॥ २१ ॥
विहितौ वित्तविरहा द्धिवासो द्विजालये ।
शिष्यैर्वाचार्यभवने तत्रकुर्यात्परिग्रहम् ॥ २२ ॥
प्रागवद्र्चनपूर्वन्तु भूततर्पणपश्चिमम् ।
ओदनंदधिलाजाज्य मधुतोयपरिप्लुतम् ॥ २३ ॥
भूततर्पणमित्युक्तं तद्विनातत्रतेनिशान् ।
सन्तिष्ठन्तेबहिःक्रुद्धाः कांक्षमाणाःपरंवधम् ॥ २४ ॥
अतस्थविहितंयत्ना-त्स्थानेक्षेत्रे कृतेर्चाते ।
निर्विघ्नसिद्धयेद्द्या द्वलिंसर्वत्रसर्वदा ॥ २५ ॥
कृत्वैवम्मंगळार्थन्तु दीर्घं घण्टारवं शुभम् ।
स्वपदा त्प्रागवदुत्थाप्य प्रोच्चार्यप्रणवम्महत् ॥ २६ ॥
प्रवेशयेत्ततस्तस्मिन् लाजान् सिद्धार्थकान् शुभान् ।
फलानिश्रीफलादीनि चन्दनादीनि रोचनाम् ॥ २७ ॥
श्वेतपूर्वास्सुमनस स्तम्महीरुहमञ्जरीम् ।
साग्रान् हरित दर्भांश्च सर्वरत्नानि काञ्चनम् ॥ २८ ॥
सर्वौषधीस्तंगळाद्यं सुगन्धिनिचयं शुभम् ।
पद्मकं शंखपुष्पञ्च विष्णुक्रान्ताञ्च कुन्दरम् ॥ २९ ॥
सप्तसप्तचधान्यानि बीजानिच समानिषट् ।
शालिश्यामाकनीवार तण्डुलं भूरिसंस्कृतम् ॥ ३० ॥
गोसम्भवानिवैपंच पात्रिष्वौदुम्बरेषुच ।
तत्स्नाववर्जितान्यानि तान्येव सुबहून्यपि ॥ ३१ ॥
प्रतिक्षणोपयोगार्थं भाण्डेष्वपि नवेषुच ।
पाद्याचमनकार्यार्थं द्द्यन्नं विनिवेदने ॥ ३२ ॥

हेमाद्युत्थानिपात्राणि मृदुपर्णपुटानिवा ।
पाण्डराणिदुकूलानि वस्त्रयुग्मद्वयन्त्रयं ॥ ३३ ॥
उपवीतंचोत्तरीयं सुसितेधौतवाससी ।
कौशेयानिपवित्राणि कंकणंचांगुलीयकम् ॥ ३४ ॥
स्फाटिकश्चाक्ष सूत्रंच पद्माक्षन्तु शुणिनिर्क ।
पंचलोहमयंचक्रं सशंखं द्वादशारकं ॥ ३५ ॥
कृतपंयोगपट्टंच नेत्रवस्त्रं मृगाजिनं ।
कुचीकाशांशुकंपट्टं पादुकेचउपानहौ ॥ ३६ ॥
दण्डंप्रतिग्रहंछत्रं पूर्णगोधूमकाष्टकम् ।
चतुर्वर्णानि माल्यानि सुन्दरंपावनंलघु ॥ ३७ ॥
नीलशाद्वल सम्मिश्रं हरितंपत्रसंचयम् ।
गुग्गुलुंमृदधूपंच दीपतैलंच वर्तयः ॥ ३८ ॥
दर्पणंधूपपात्रंच घण्टामर्घ्यादिपात्रकं ।
रजांसिकरणीयुग्मं शालिकां घटिकांसितां ॥ ३९ ॥
पंचांगुलन्तु सुदृढं हेमाद्यंकुशपंचकम् ।
अलक्तरंजितं सूत्रं सुशिता कर्तरीक्षुरम् ॥ ४० ॥
काण्डान्यष्टौतु साग्राणि बर्हिपक्षान्वितानि च ।
प्रोन्नतानि स्थिराग्राणि लोहहृत्काष्ठजानि वा ॥ ४१ ॥
रंजितानि सुधाद्यैस्तु तदाधाराणि यानि च ।
कुल्लिका न्यम्बुकुम्भानि भृंगारं करकां शुभाम् ॥ ४२ ॥
अकालमूलनिर्गर्भं साधारं कलशं तथा ।
स्थालीं कमण्डलुं दर्वीं तत्पिधानन्तु चुल्लिकाम् ॥ ४३ ॥
भद्रपीठं चतुष्पादं चतुरश्रायत त्रयम् ।
मात्रावित्तं सताम्बूलं दन्तधावनसंचयम् ॥ ४४ ॥
शुष्कगोमयसंयुक्ता मरणिं चाग्निजं मणिम् ।
पालाशदूर्वासमिध स्साग्राः परिधयस्तु ये ॥ ४५ ॥

प्रभूत मिन्धनं शुष्कं माज्यार्क्तं तिलतण्डुलम् ।
प्राशुकं सुक्स्रुवाद्यं च होमोपकरणं च यत् ॥ ४६ ॥
सर्वं पश्मकपर्यन्तं वृहत्पात्रद्वयान्वितम् ।
पूर्वोक्तानां च भोगानां मध्यायस्थण्डिलार्चने ॥ ४७ ॥
संयाति चांगभावं तत ज्ञात्वा सर्वं प्रवेशयेत् ।
अनुग्रहधिया चार्यो भक्तानां भाविनां विभोः ॥ ४८ ॥
दिव्यभोगोपलिप्सूनां निश्रेयस पदार्थिनाम् ।
[ प्रत्येकैकं हि यत् गांगे वर्धयेत द्रव्यमूर्तिना ।
नित्येनाव्यक्ततत्वेन सन्मन्त्रब्रह्मणासह ॥ ]
सार्धं सर्प्यादिकं दत्वा न्मन्वरपूर्वं यथागमम् ॥ ४९ ॥
फलदं त्या त्सकामाना मकामानां हि मोक्षदम् ।
सह साध्य स्तत स्तत्र प्राग्वत्स्नात्वा कृताह्निकः ॥ ५० ॥
सम्प्रविश्याप्य दिक्संस्थः प्राङ्मुखः प्रविशे ततः ।
पद्मासनादिना मार्गे चर्मण्याचामपूर्वकम् ॥ ५१ ॥
कुर्या यदधिकारेण मन्त्रेणानुग्रहं शिशोः ।
तेनांगसहितेनैव सर्वं कर्म समाचरेत् ॥ ५२ ॥
समस्तैर्वैभवैर्मन्त्रैः कार्यो वा नुग्रहो यदि ।
सर्वाराधनदानार्थं वा द्विषट्कासये तदा ॥ ५३ ॥
विशाखयूपमन्त्रेण कुर्या त्तद्धारणाद्वयम् ।
तर्दाजन तनुं व्याप्य प्राग्वत्तदभिमान्त्रितैः ॥ ५४ ॥
पुरा इते यथाशक्ति मण्डनं च समाचरेत् ।
प्राक्समालभने वस्त्रैः कटकाद्यंगुलीयकैः ॥ ५५ ॥
सितोष्णीषेण महता सितमाल्येन वै सह ।
मुखवासे स्सताम्बूले र्ललाटतिलकेन च ॥ ५६ ॥
कृत्वा शुभेन शारीरं योगपट्टेन संस्थितम् ।
हृत्पुण्डरीकमध्ये तु संन्यस्ये द्बीज मैश्वरम् ॥ ५७ ॥

करयोः पद्मनाभीयं भुवाख्य मथ विग्रहे ।
शेषे शालभ्य पादान्त मामूर्धश्चापि पूर्ववत् ॥ ५८ ॥
हस्तयो विंग्रहे सांगं विन्यस्ये द्वीज मेश्वरम् ।
मुद्राबसानं कृत्वैव सम्प क्तदनु चाहरेत ॥ ५९ ॥
पाणिभ्यां शंखचक्रे द्वे स्वमन्त्रेणाभिमन्त्रिते ।
भूत्वा तदात्मना पश्चा त्ते निधाय धरातले ॥ ६० ॥
अवलोक्यालिंकं तरस्थं प्रवर्तेताथ कर्मणि ।
अस्त्राभिमन्त्रितं कृत्वा कर्मभूंगान्तरे स्थितम् ॥ ६१ ॥
तेनोपलिप्य सम्मार्ज्य यागस्थानं निघृष्य च ।
तद्ब्रह्माख्या यथो भूय स्तेजसो हि विशुद्धये ॥ ६२ ॥
हेमपूर्वाणि रत्नानि बीजानि विनिवेश्य च ।
गालितेनाम्भसा पूर्य ततः पात्रचतुष्टयम् ॥ ६३ ॥
एकस्मिन् चन्दनादीनि पूर्व सिद्धार्थकानि च ।
आक्षतानि कुशाग्राणि तण्डुलानि तिलां स्तु ये ॥ ६४ ॥
रत्ना नुत्तमान् धातून् सफला न्विनिवेशयेत ।
द्वितीये दधिमध्वाज्य क्षीरबिन्दुचतुष्टयम् ॥ ६५ ॥
कुशाग्रेण सबाह्लीकं सपुष्पं; सितसण्डुलम् ।
दूर्वाक्षविष्णुक्रान्तां च श्यामाकं शंखपुष्पिकाम् ॥ ६६ ॥
पद्मकं च तृतीये तु कुन्दरेण समन्वितम् ।
स्वगेलाद्यचयं सर्व सकर्पूरं च चन्दनम् ॥ ६७ ॥
विनिक्षिप्य चतुर्थेतु द्रव्यं सर्व मिदं शुभम् ।
हृन्मन्त्रेण चतुर्णान्तु कुर्या द्वै द्रव्ययोजनम् ॥ ६८ ॥
सार्घेणमूलमन्त्रेण सर्वतश्चाभिमन्त्रयतु ।
षडंगेनतवैव कुर्यात्पुष्पादिनार्चनम् ॥ ६९ ॥
यथाक्रमेणसर्वेषां ध्येयं सर्व सुधोपमम् ।
आवाहनेसन्निधाने सन्निरोधेतथार्चने ॥ ७० ॥

विसर्जनेर्घ्यदानन्तु प्राक्पात्राग्नितयमाचरेत् ।
तदम्भसाचार्दणन्तु तथैवपरिषेचनम् ॥ ७१ ॥
कुर्यात्प्रणवनंदानं प्रीणनंप्रीतिकर्मच ।
प्रोक्षणंसर्ववस्तूना मन्यस्मादुदकेनतु ॥ ७२ ॥
आरम्भेसर्वकार्याणां सासमाप्तौतथैवहि ।
ऊनाधिकानां साम्येतु ज्ञातव्यं त्वघशान्तये ॥ ७३ ॥
कार्य तदर्घ्यदानश्च नित्यम्मन्त्रात्मनाविभोः ।
कुम्भोपकुम्भकुण्डानां मन्त्रात्मकळशार्चने ॥ ७४ ॥
सम्पूजनेच भूतानां शुर्वादीनाम्महामते ।
दद्याशिष्यात्मपूजार्थं मुक्तानुक्तार्चनम्प्रति ॥ ७५ ॥
पाद्यदानंतृतीयात्तु निर्यपात्रात्समाचरेत ।
चतुर्थात्तुयथाकाळं दद्यादाचमनन्ततः ॥ ७६ ॥
मुख्याघ्र्यवारिणाप्रोक्ष्य पृथग्भाण्डस्थितम्पुरा ।
पञ्चगव्यन्ततःप्राग्य त्कल्पनीयं हृदादिकैः ॥ ७७ ॥
कुशोदकन्तदस्त्रेण दत्वाथेनाभिमन्त्र्यच ।
अथपाणिद्वयेनैव अग्नीषोमात्मकेनच ॥ ७८ ॥
योग्यतापदवीनीत्वा प्रोक्षयेद्यत्पुराहृतम् ।
साम्भसातेनवैसर्व विष्टराग्रगतैःकुशैः ॥ ७९ ॥
सर्वबीजानि धान्यानि सिद्धार्थक युतान्यथ ।
कृत्वास्त्र परिजप्तानि ध्यात्वाचास्त्रसमानिच ॥ ८० ॥
विघ्नोपशान्तयेवेगा द्दशदिक्षु विनिक्षिपेत् ।
संहृत्य बर्हिकूर्चेन प्राच्यान्दिशि निधायवै ॥ ८१ ॥
तद्गर्भीकृत्यसंलिख्य हेतिराट्चन्दनादिना ।
करवीं कुम्भसंयुक्ता मळंकृत्य यथापुरा ॥ ८२ ॥
भोगैः प्रावरणान्तैश्च मूर्तिभूतौ विचिन्त्यच ।
तदेवताशरीरन्तु पश्येदंबरवच्छुभं ॥ ८३ ॥

विद्याखयूपं तन्मध्ये समावाह्ययजेत्ततः ।
क्रमान्मुद्राषखानन्तुं तस्पदक्षिणदिग्गतम् ॥ ८४ ॥
अस्त्रविग्रहरूपश्च स्मृत्वाकुरवकन्तुतत् ।
अस्त्रमन्त्रन्तु तन्मध्ये ध्यात्वाभ्यर्च्ययथाविधि ॥ ८५ ॥
ध्यंघयन्तञ्च विघ्नानां कालंकर्मावसानकम् ।
इदमभ्यर्थयेद्विद्वान् वाञ्ओवद्धांजलिस्स्थितः ॥ ८६ ॥
यागालयंहिविश्वेश गृहाणरचितम्मया ।
आसमाप्तेर्भगविभो क्रियांगानांचसन्निधिम् ॥ ८७ ॥
ततोस्त्रोदकधारांचा प्यच्छिन्नांभितिकानयेत् ।
प्रदक्षिणेनमांभागा त्तत्पदांतंचसंस्मरेत ॥ ८८ ॥
सन्निधायाधकुम्भेन सहकुर्यात्प्रदक्षिणम् ।
अर्घ्यदानन्तयोःकृत्वा प्राग्भागेचाधरोर्ध्वगम् ॥ ८९ ॥
पूजितंचार्घसंच्छिन्नं चक्रमन्त्राभिमान्त्रितम् ।
निदध्याद्भद्रपीठन्तु तवाधारगतंन्यसेत ॥ ९० ॥
सास्त्रांहिमन्त्रकलश मर्चयित्वाप्रणम्यच ।
दिगीश्वरगणंदिक्षु पूर्वोक्तंविन्यसेत्ततः ॥ ९१ ॥
सतंस्समर्चनन्त्वेषां कृत्वाक्षेणहृदाखह ।
प्रणवेनस्वनाम्नाच नमस्कारांतुगेनवै ॥ ९२ ॥
तोरणध्वजपूर्वाणां कार्यमर्घ्यादिनार्चनम् ।
ततोभवनभूमध्ये ध्यायार्पितं पुरोदितम् ॥ ९३ ॥
तत्रार्चनंविभो कुर्यां त्पूर्वोक्तेनक्रमेणतु ।
पूर्णान्तन्तर्पणम्प्राग्व त्कृत्वाकुण्डेयपूजिते ॥ ९४ ॥
ततस्तुभगवद्भूतान् क्षेत्रनाथसमन्वितान् ।
अर्घ्यपुष्पादिनाभ्यर्च्य बलिमादायपात्रगम् ॥ ९५ ॥
इदमुनथाचवदतु क्षिपेद्यागगृहाद्बहिः ।
येविष्णुभाविनोभूता येचतेष्वनुमानिनः ॥ ९६ ॥

आहरन्तुबलिंतुष्टाः प्रयच्छन्तुशुभंमम ।
प्रक्षालितांघ्रिस्त्वाचान्त स्संविशेद्यागमन्दिरम् ॥ ९७ ॥
अपरेहेतुसंस्कृत्य चुल्लींप्राग्दिश्यवास्थिताम् ।
पचनालयमुत्सृज्य स्वदेशात्कुण्डमध्यगाम् ॥ ९८ ॥
स्थालींचास्त्रेणसंक्षाल्य वाह्यतोगोमयेनतु ।
विलिप्यान्तस्सुगन्धैस्तु मताप्यज्वलितैःकुशैः ॥ ९९ ॥
सन्ताड्यकुसुमास्त्रेण सितसूत्रेणकण्ठतः ।
चतुर्धावर्मजप्तेन संवेष्ट्याघ्यादिनार्च्यच ॥१००॥
चुल्ल्यांस्थाल्यांसमारोप्य तस्यां मधु घृतं पयः ।
परिशुद्धेश्रितेक्षीरे स्वमंत्रेणारोप्यतण्डुलान् ॥ १ ॥
चालयेन्मूलमन्त्रेण दृष्ट्वानेत्रेणसंस्कृतम् ।
हृदावतार्याभिघार्य शिखामान्त्रेणघट्टयेत् ॥ २ ॥
शिरसालिप्यसंक्षाल्य सुमस्त्रेनवारिणा ।
भूतिनाचन्दनाद्येन भूषयेद्गर्भपुण्ड्रकैः ॥ ३ ॥
विष्टरोपरिचान्यत्र निदध्यान्मण्डलान्तरे ।
होमंतखिद्रयेकृत्वा पूर्णांतमयवेश्वरोः ॥ ४ ॥
आधारदानमार्गेण कुर्यात्तेजोमृतात्मकम् ।
ईशाव्जनाभरुद्रेन हंसार्णेनसबिन्दुना ॥ ५ ॥
तद्दोषद्वयपट्कार प्रणवाद्विवमेनच ।
यतोपिन (?) आतोत्र स्थितिस्त्र्यम्बांच सांप्रतम् ॥ ६ ॥
अतः पुरोदितेनैव तद्वचंसम्पुटेनच ।
अथ ऊर्ध्ववसन्नाग्नं स्मरेदाशयर्वाहि ॥ ७ ॥
द्रव्यसम्पातहोमेय पूर्णांवितुकृतेसति ।
हृद्वापाहुतियोगेन पर्येकृत्ययगन्तुतत ॥ ८ ॥
स्थण्डिलेकस्थेतोच विनियुञ्ज्यपयाविधि ।
तद्वाचभावितंशेषं कुम्भाक्रान्तांयियत्नतः ॥ ९ ॥

क्रमान्मूलाख्यनेत्रेण जुहुयाच्चशतत्रयम् ।
नीरयात्सम्पूर्णभावंच पूर्णयापुनरेवाहि ॥ ११० ॥
ततश्चोत्तरतःकुर्या न्मण्डलंगोमयादिना ।
प्रासमान्तंविष्टरंतत्र दद्याद्दर्भहृदन्तरे ॥ १ ॥
तन्मध्येविन्यसेच्छिष्यं समांघ्रि स्तब्धविग्रहम् ।
प्राङ्मुखंयततद्वाक्चित्त विलिङ्कपन्धृताञ्जलिम् ॥ २ ॥
अस्त्रेणमन्त्रयत्कुर्या स्मोक्षणन्तस्यचांभसा ।
तेनैवताडयेन्मूर्ध्नि दीप्तैस्सिद्धार्थकैस्तिलैः ॥ ३ ॥
अनादिवासनोत्थानां बन्धानांचालनायच ।
फडन्तेनाथचास्त्रेण कुशाग्रेणांघ्रिगोचरात् ॥ ४ ॥
समुल्लिख्यशिखान्तंच ऋज्वर्थमार्गसन्ततेः ।
जालवन्मन्त्रजालेन व्याप्तंस्मृत्वाचसंवृतम् ॥ ५ ॥
बध्नीयान्नेत्रमन्त्रेण तस्यनेत्रेचवाससा ।
वस्त्रपूर्णकुसुमैर्गन्धैः क्रमापूर्णाञ्जलिपुरा ॥ ६ ॥
पाणिनादायचास्त्रेवा निधायाग्रस्थितंवटुम् ।
प्रक्षेपयेद्देवधाम्नि नतमूर्ध्नांजलिंचतम् ॥ ७ ॥
तस्योद्घाटितनेत्रस्य त्वदृष्टस्पेतरैर्जनैः ।
कुशलाध्वनिविष्टस्य दृष्ट्वाविभक्तिलक्षणम् ॥ ८ ॥
रोमांचोत्सुकयहर्षाद्य मानन्दाश्रुसमन्वितम् ।
सप्रणामजयालाप दिक्प्रदक्षिणसंयुतम् ॥ ९ ॥
शुद्धान्तःकरणंबुध्वा योग्योयमितिभावयेत् ।
यद्वासदाच्युतात्मान मात्मानंभावयंस्ततः ॥ १२० ॥
स्मरेद्दक्षिणपाणौतु चक्रांबुरुहमध्यगम् ।
प्रधानदेवतावृन्दं स्वेस्वेधाम्निपरेस्थितम् ॥१॥
स्वमरीचिगणैनैव द्योतयन्तन्तुचाखिलम् ।
तेनाच्युतकरेणैव सोदकेनालभेततम् ॥ २ ॥

पुष्पपूर्णाञ्जलौपृष्ठे तस्यताम्रितयाश्रितम् ।
कृत्वामन्त्रगणन्तंवै मोक्षविघ्नविशान्तये ॥ ३ ॥
पुनरभ्यर्चयेन्नीत्वा मन्त्रेण परमेश्वरम् ।
आधाराधेयभावेन बुध्यान्तस्संस्थितिं पुरा ॥ ४ ॥
क्ष्मादीनां बुद्धिनिष्ठानां वासनानां तथात्मनः ।
ततः कुर्याच्च विश्लेषं तेषां ध्यानार्चनादिना ॥ ५ ॥
आत्मतत्वं समाश्रित्य कर्मचक्रं हि वर्तते ।
तच्चक्र मवकम्प्यास्ते बुद्धिनिष्ठं हि सप्तकम् ॥ ६ ॥
अज्ञानव्यापकात्वं च सुखदुःखादिवेदनम् ।
सर्वज्ञस्यात्मतत्वस्य कर्मचक्रावलम्बनात् ॥ ७ ॥
चपलं कर्मचक्रंत द्भ्रमानं सदैव हि ।
क्ष्माद्य माधार माश्रित्य तावदेवावतिष्ठते ॥ ८ ॥
याव त्सर्वज्ञशक्त्या वै कर्मात्मानमबोधितः ।
मबुद्ध स्तस्य संरोधं कर्तुं शक्नोति सर्वदा ॥ ९ ॥
मन्त्राराधनपूर्वेण ज्ञानानुष्ठानकर्मणा ।
अतो य आश्रयः क्ष्माद्य स्स्वत्वसारो हि पौरुषः ॥ १६० ॥
नीरसं चेरिणी भूतं कुर्या त्संस्थाप्य सांप्रतम् ।
निर्मुक्तचित्फलो येन कर्मवृक्षो विनश्यति ॥ १ ॥
शुद्ध्यर्थ मात्मन स्तस्मा त्सर्वज्ञस्याग्रत स्स्थले ।
भूताधिदेवमन्त्राणां कुर्या द्वै पूजनं क्रमात् ॥ २ ॥
चिन्तानुविद्धं सामान्य म्मन्त्रनाथै रधिष्ठितम् ।
क्ष्माद्यध्वानञ्च बुद्ध्यन्तं ध्यात्वा पद्म [ पु ] नपुरा ॥ ३ ॥
तत्र मध्ये जनाभन्तु प्राग्भागे केसरोद्वहम् ।
पद्मकञ्च विश्वरूपाद्यं क्ष्माधारान्तन्तु विन्यसेत् ॥ ४ ॥
नीत्वा स्वनाम्न आद्यर्णं क्ष्मान्तानां बीजतां पुरा ।
तेन तेषां बलान्तस्थं प्राग्वत्प्रचारं स्मरेत् क्रमात् ॥ ५ ॥

क्ष्माबीजश्च दळाग्रेषु मूलनिम्नेषु षट्सु च ।
इष्ट्वा सर्वेन्द्रियाधार मित्यभिन्नं पुरा ततः ॥ ६ ॥
चिद्वातस्कन्धवृन्देन खस्थितेनान्तरीकृतम् ।
उपर्युपरि योगेन वृद्धयन्तं समुपास्थितम् ॥ ७ ॥
भेददृष्ट्या यजे त्सम्यक् भूय स्संहारधर्मिणा ।
सवज्रं स्वेन यजेन पीतं तुर्याभिलक्षणम् ॥ ८ ॥
हेमाब्जभूतं तद्वचाराचा क्ष्मावार्यं तच्च मध्यतः ।
वाराहंसंयजे न्मन्त्रं सांगं सावरणं क्रमात् ॥ ९ ॥
तत्कारणाश्रितं कृत्वा परिधानसमन्वितम् ।
अथ क्ष्मामण्डलोर्ध्वस्य मर्धेन्दुसदृशं स्थितम् ॥ १४० ॥
पुरं पद्मांकितं स्मृत्वा सितपद्मोदरं महत् ।
सरश्शयन्तदन्तस्थ मभिसन्धाय संयजेत् ॥ १ ॥
तेजोमयं तदूर्ध्वेतु त्रिकोणं भावये त्पुरा ।
रक्तज्वालाकणाकीर्णं स्वस्तिकै रुपलांछितम् ॥ २ ॥
नृसिंहं पूजये त्तत्र मध्ये रक्तारविन्दगम् ।
तस्योपरि सितं वृत्तं पुरं तारागणांकितम् ॥ ३ ॥
स्मृत्वा नीलाम्बुजाक्रान्तं स्मरे त्तत्र खगाननम् ।
मीरूपंच तदूर्ध्वेतु स्मरे च्छन्दे रलक्षणम् ॥ ४ ॥
ध्यायेत्तदन्तस्सूर्याभं प्राग्वर्णंतुसपंकजम् ।
तत्रवागीश्वरन्देव मभ्यर्च्यविधिवत्ततः ॥ ५ ॥
तत्कर्णिकोदराकाशे नानारत्नरुचिन्ततः ।
संस्मरेत्कमलाकारं चित्तवृत्तिमयन्तुयत् ॥ ६ ॥
यजेत्तन्मध्यगंविश्व रूपन्तुमनसःपतिं ।
तदूर्ध्वेमृतगर्भन्तु शीतांशुकरकोटिवत् ॥ ७ ॥
पद्मंस्वेनात्मनात्मानं धारयन्तंविभाव्यच ।
समभ्यर्च्यस्तदन्तस्थो व्यञ्जनाभोभियाम्पतिः ॥ ८ ॥

पर्यंगन्धरस रूप स्पर्शशब्दमनोधियां ।
क्रमेणाधीशसंयन्तु अवतार्यपरायजेत् ॥ ९ ॥
अर्चयित्वार्चयित्वाच न्यसेत्तत्रैवतत्पुनः ।
येवर्णाभुत्तयोनीनां राश्मीपाःकमळोपमाः ॥ १५० ॥
संस्थितिसंस्मरेत्तेषा मस्मिश्चक्रौ तथागते ।
स्नानादियाजनारूपौ स्वभेदे नात्मनिस्थिताम् ॥ १ ॥
निश्शेषबीजरश्मीद्ध पद्मानां भाविधारिणीं ।
निर्गतांवैषयात् स्वत्वा द्वियुक्तांस्वामिनाकृतां ॥ २ ॥
क्षरद्रूपापरिभ्रष्टा न्निराधारांच संस्मरेत् ।
प्रणवेनसमभ्यर्च्य दिक्षुकालेभ्युपस्थिते ॥ ३ ॥
साधिभूताधिदैवश्च इत्थंभूतसप्तकम् ।
स्वयमभ्यर्चयेत्पश्चात् शिष्यमञ्जलिनावृतम् ॥ ४ ॥
ततोग्रेस्सन्निधिगत्वा ध्यात्वायामत्रयोपरि ।
दक्षिणेनात्मनोदाभे विष्टरेचक्रमन्दिरे ॥ ५ ॥
सकुशेनस्वहस्तेन दक्षिणंचरणंगुरोः ।
अवलम्ब्यसमासेतथे स्पर्शनात्वेकतात्मना ॥ ६ ॥
बीजेनाग्रे शिखान्तश्च स्मरेत्तोयमयंविभुम् ।
विशेषयन्तंसहसा ज्ञानाद्यार्थमविग्रहम् ॥ ७ ॥
संस्कारश्चक्रंविविधं प्रेरकं दुःखवर्त्मनि ।
नास्यैक्य मभिसन्धान मभिसन्धानचेतसा ॥ ८ ॥
विश्लेषंकर्मणांतद्व द्धर्मणास्त्रेण होमयेत् ।
क्रमेणसघृतानांच तिलानां द्वादशाहुतीः ॥ ९ ॥
अनुसन्धाय सम्पाद्यो मयायं वैपरात्मनि ।
दद्यादष्टावाहुतीश्च मूलेनसघृताःपुरा ॥ १६० ॥
तदुत्तमाङ्गं संस्पृष्टा स्रुवेणाज्यान्वितेनच ।
हुत्वाशान्त पदेनैव भूयस्सर्वं गुणात्मना ॥ १ ॥

प्राक्संरूपमाचरेद्धोम मन्त्रान्तरयोगतः ।
आचेश्वरपदात्सम्यक् नेत्रान्तंहोवमवह्नि ॥ २ ॥
इतिसम्पातहोमोवै सम्पन्नेसतिजायते ।
कर्तव्यो मन्त्रमाहात्म्याद् संस्कारे निखिलैर्युतः ॥ ३ ॥
साम्प्रतं ष्वाणिमादीनां गुणाना मुत्तरत्त्रतु ।
विभोराराधनात्सम्यत योग्याभ्यासाद्य भाजनं ॥ ४ ॥
कृतेसम्पातभवने आस्येचाय सकृत् सकृत् ।
मन्त्राणां तर्पणंकृत्वा सार्चनं श्रावयेद्विभुम् ॥ ५ ॥
अस्यकर्मात्मतत्वस्य कर्मपिण्डं [ त्रित्यं ] सवासनं ।
यदनेकप्रकारन्तु त्वच्छक्त्या स्तंभितंमया ॥ ६ ॥
प्रायश्चित्तनिमित्तन्तु जुहुया तदनन्तरम् ।
धीजेनान्तनिरुद्धेन स्वांगेनाकृतिकाष्टकम् ॥ ७ ॥
एतावता महाबुद्धे जंन्तो र्जन्माश्रितस्य च ।
यातिव्यामिश्ररूपस्य हेयरूपस्य संक्षयः ॥ ८ ॥
मोक्षैकफलदो धर्म उपादेय स्त्वनन्तरम् ।
योसौ साम्मुख्य मायाति विविध स्तस्य चाच्युतः ॥ ९ ॥
येनान्वर्थीन मभ्येति ह्यज्ञानं सहसाक्षयम् ।
अथादायारुणं सूत्रं कृत्वा नैकगुणं पुरा ॥ १७० ॥
निरीक्षितं दृशा चास्त्र वारिणा परिशोधितम् ।
तदंगुष्ठावधि यावद् शिखान्ता त्सम्प्रधार्य च ॥ १ ॥
संस्मरे त्सर्वदुःखानां सम्बन्धानां तदास्पदम् ।
संविश्य देवयानेन शिशुचैतन्यसन्निधिम् ॥ २ ॥
हुंफडन्तं च शिरसि नाम च प्रणवादिकम् ।
हृन्मन्त्रसम्पुटस्थं च कृत्वा वै पितृधर्मेना ॥ ३ ॥
आनीय सह सूत्रेण नये न्नेत्रेण साम्यताम् ।
अभ्यच्यार्घ्यादिना वेष्ट्य कवचनात्मना मना ॥ ४ ॥

ॐ हुं अदन्यै [ स्व ] हुं स्वाहेत्यनेना [हु] हुतिसप्तकम् ।
हुत्वाऽस्त्रमन्त्रजप्तेन सितेन रजसा ततः ॥ ५ ॥
सन्ताड्यं शैशवं कायं विशे तदवाधि तथा ।
विश्लेषयामुकं ब्रूया त्पदं वीर्यपदानुगम् ॥ ६ ॥
तं ज्ञात्वा नयता [ चके ] नाथ त्वायन्तेन विकृष्य च ।
स्वपुद्धचानुगतं कृत्वा ध्यात्वा नक्षत्रगोळवत् ॥ ७ ॥
सन्ताड्याभ्यन्तरे सूत्रे हंसार्णेन सबिन्दुना ।
नदीमणवगर्भेण रुद्रशक्ति च विग्रहे ॥ ८ ॥
वासनामय मित्येव मातिवाहिकसंज्ञकम् ।
सूत्रात्मकं वपुः कृत्वा आत्मशक्त्या विभावितम् ॥ ९ ॥
बलमन्त्रेण संरुद्धं तदर्थं जुहुया ततः ।
उक्त्वा ओमात्मने स्वाहा द्विषट्कपरसंख्यया ॥ १८० ॥
आदाय भाविनो बन्धा न्व्यापकान् शुद्धभोगदान् ।
ज्ञानादय स्समाश्रित्य येऽत्र तिष्ठन्ति सर्वदा ॥ १ ॥
स्वस्थानेषु स्वमन्त्रेभ्य स्तां स्तत्रैव च योजयेत् ।
यथाक्रमेणार्चितानां कृत्वा तेषां च तर्पणम् ॥ २ ॥
अथ संस्कारचक्रस्य तत्त्ववृन्दाश्रितस्य च ।
सर्वगस्यापि वै विद्धि स्थितिं नियतलक्षणान् ॥ ३ ॥
तत्त्वव्याप्ति च्छलेनैव शरीरे पांचभौतिके ।
गुल्फजानुकटीपक्षः कर्णभ्रूकावटावधि ॥ ४ ॥
बुद्धयन्तानां धरादीनां क्रमा दुग्निसप्तकम् ।
अहंकार स्तदुत्थास्तु ये भेदा विविधा अपि ॥ ५ ॥
चित्तजा अपि येचान्ये तिष्ठन्ति मनसा सह ।
सकाशोरथा स्तथा बौद्धा स्ताद्रूपा स्त्वपरे च ये ॥ ६ ॥
अनेकभेदभिन्ना स्तु श्रिता आश्रित्य ते धियम् ।
द्विसप्तभुवनं विश्व मनेकरचनान्वितम् ॥ ७ ॥

शतकोटिप्रविस्तीर्णं मष्टयोन्युद्ध्य संवितम् ।
स्थिर धराश्रितम्भूयो बोद्धव्य सर्वदैवहि ॥ ८ ॥
चतुष्क जाग्रदाद्य य स्पटाना मप्सु वर्तते ।
मन्त्रकोटिसहस्राणां विविधानां महामते ॥ ९ ॥
योगसिद्धिसमेताना संस्थिति स्तैजसे पदे ।
चातुरात्मीयतत्वाना क्षेय. कैवल्यदेहिनाम् ॥ १९० ॥
शान्तोदितस्वरूपाणां सन्निवेशो मरुत्पदे ।
अनेकशक्तिभूताना ज्ञानादीना च लाञ्छिन् ॥ १ ॥
कालाना माश्रयो व्योम या सा मूर्ति र्न लक्ष्यते ।
संस्थिता श्चादयो वर्णा पदे षष्ठेतु मानसे ॥ २ ॥
अस्मिन्मात्रानुरक्तानि कीर्तितेस्मिन् षडध्वनि ।
क्षिपस्तु चाहरसंवेष शुद्धचर्यं लीलयैव हि ॥ ३ ॥
स स्थित कर्मतत्वानि बुद्धिशक्तिपदे प्रभु ।
निरस्तदोष कृत्वा प्रा क्समाविश्य तदेवहि ॥ ४ ॥
स्वा शक्ति मुपसहृत्य शान्ति मभ्येति शाश्वतीम् ।
मधुसूदनपर्यन्त पातालशयना द्य ॥ ५ ॥
सप्तक सप्तक षट्क सम्पश्ये त्क्ष्मादिपश्चके ।
मनस्यवस्थित ह्येष शक्तीशा त्रितय हि यत् ॥ ६ ॥
बुद्धौ कमलनाभात्मा देव स्सर्वेश्वर प्रभु ।
पुन स्स्वसिद्धै र्युक्ताना सर्वेषा पार्थिवे पदे ॥ ७ ॥
द्विसप्तभेदभिन्नेतु बोद्धव्या संस्थिति शुभा ।
तीव्रमन्दादिक बुध्वा भाव भक्तिसमन्वितम् ॥ ८ ॥
आलम्बनवशा त्कुर्या त्सर्वेषा स्वपदे स्थितिम् ।
एषा वैभवदीक्षाया मधिवासनकर्मणि ॥ ॥ ९
क्रम उक्त स्त्वयेदानीं मपराया निबोधतु ।
आपदा त्राभिदेश च महाभूते धरादिके ॥ २०० ॥

व्याप्तं चतुर्थां वाय्वन्ते स्तदूर्ध्वं नभसा पुनः ।
पूरितं ह्यन्तं च तदुद्देशा च्छिद्रावधि ॥ १ ॥
विभाव्य मनसा व्याप्त मनेनैव क्रमेण तु ।
स्थित स्वंकर्पणान्ता श्चा प्यनिरुद्धादय स्तु वै ॥ २ ॥
समाकृष्याथ पट्कन्तु शुद्धवातीतस्तु शुद्धिग· ।
समादायाममताय च प्राग्वदभ्येत्य मूर्छि [ तिं ] ताम् ॥ ३ ॥
व्यापिका मूर्तय स्सर्वेशा· पृथग्भक्तिपरायणे ।
सदाकारे स्वरूपे स्तु सन्नृता स्तायनीषु च ॥ ४ ॥
माश्त्तरूपासु च तिष्ठन्ति सर्वा स्तर्वासु सर्वदा ।
स्मृत्वा ह्यभेदभावेन चट्कर्मे [?] माङ्गवपुरा ॥ ५ ॥
ततस्तु क्ष्मादिना तेन सर्वं व्याप्त विचिन्तयेत् ।
चतुरात्मान मव्यक्त शब्दमूर्ति निराकृतिम् ॥ ६ ॥
गुणमात्रे विभिन्न च तत्व तत्रैवभावयेत ।
अपाह्येणाथ वपुषा स्वस्वभावमयेन च ॥ ७ ॥
सङ्कान्तेन तु वै शुद्धो सर्वदेवोदितेन तु ।
स्वशक्त्या वै ह्यनिच्छातो जीव मादाय सोर्ध्वगम् ॥ ८ ॥
स्वसामर्थ्य स्वशक्त्यातत् शान्तात्मास्ते विलाप्यच ।
शुद्धाशयानां भक्ताना तत्पदैकाभिलाषिणाम् ॥ ९ ॥
तत्सामर्थ्यानुविद्धानां सर्वत्र व्यक्तिमेतिच ।
अतस्तुयदसम्वेद्यं हेयपरिमितन्त्वपि ॥ २१० ॥
तत्तत्तदात्मनाभ्येति सर्वदाभावितात्मना ।
इत्यादौस्सर्वसामान्यो नित्योविद्याख्य आश्रयः ॥ १ ॥
बोद्धव्यस्सोपिवदनु ह्य सामान्य तदागत· ।
आमोक्षाद्गभावच जीवानांस्वयमेवहि ॥ २ ॥
वज्रवत्सूक्ष्मरूपेण सम्पूर्णेनमहामते ।
दीक्षाकालेतु शिष्याणा परिक्षेय यथोदितम् ॥ ३ ॥

एवमेवविजानीया द्रूयस्सौत्रेतु विग्रहे ।
सप्तधातुविभज्यादौ घनैर्घनैकुंकुमादिना ॥ ४ ॥
चित्रीकृत्यचतुर्दशा त्मणवाद्यन्तगैस्ततः ।
स्वनामपदसंयुक्तो ग्रथनीयस्स्वकारणैः ॥ ५ ॥
एवंप्राप्तिमयेभागे ह्रदापूर्णान्तिमेकृते ।
नीत्वावैमण्डलस्यस्य विभोस्तंसन्निवेदयेत ॥ ६ ॥
घर्मणाच्छादितंकृत्वा निधायकलशाग्रतः ।
सशिष्योर्थार्चनंकुर्या त्पुनर्विश्वात्मनोविभोः ॥ ७ ॥
प्रदक्षिणैःप्रणामैस्तु नानास्तुतिपदैस्सह ।
तत्रोपलिप्तेभूभागे मण्डलान्तर्गतंबहिः ॥ ८ ॥
स्थानभेदस्थितंकुर्या न्नेत्रहृन्मन्त्रमन्त्रिते ।
पंचगव्येवनौदन्त धावनेपिनियोजितम् ॥ ९ ॥
भुक्तोज्झितेदन्तकाष्ठे कुर्यात्सिद्धिविचारणम् ।
सौम्यवारुण ईशाने यदिपूर्वादिगाननम् ॥ २२० ॥
तत्सिद्धिसूचकंविद्धि विपरीतमतोन्यथा ।
तद्ध्वंसनायजुहुया द्दीर्घमन्त्रेणवैशतम् ॥ १ ॥
धूपानुलेपनादीनि रजांसियटिकादयः ।
लाज्यानिचतिलादीनि योग्यान्यन्यानिलांगलिन् ॥ २ ॥
उद्धृत्योत्तरादिकृत्वा वर्मजप्तेनवाससा ।
अभुक्तेनाहतेनैव स्वाच्छाद्यसंसितेनच ॥ ३ ॥
समभ्यर्च्यास्त्रमन्त्रेण पुष्पधूपानुलेपनैः ।
क्षान्त्वास्थलस्थितन्देव मन्त्रैवाकलशेन्यसेत ॥ ४ ॥
अथशुद्धेचभूभागे हृन्मन्त्रितकुशास्तरे ।
कृत्वाप्राङ्मस्तकंशिष्य वर्मजप्तांशुकेनतु ॥ ५ ॥
हृदावकुण्ठिततनुं मुख्यमन्त्रमनुस्मरन् ।
स्वापयेत्स्वप्नलाभाय ततोहृन्मन्त्रितैस्तिलैः ॥ ६ ॥

सिद्धार्थकयुतैस्तस्य निदध्यात्परिखांबहिः ।
सर्पादिःपक्षमन्त्रेण प्राग्वदिग्स्वष्टकांह्यित ॥ ७ ॥
प्रदाक्षिण्येनतच्चापि सितसूत्रेणवर्मणा ।
चतुरावेष्टयित्वातु मण्टपान्निष्क्रमेद्बहिः ॥ ८ ॥
दन्तकाष्ठादिकंकर्म विनिष्पाद्यस्वयंस्वपेत् ।
कृतखेदर्भशय्यायां कृत्वादक्षिणदिक्छिरः ॥ ९ ॥
सम्स्पृशन् स्वांघ्रियुग्मेन शिशुंशयनसंस्थितम् ।
भगवन्तंहिमनसा प्रार्थयन्नपवर्गदम् ॥ २३० ॥
श्रीमादीशजगन्नाथ सर्वज्ञहृदयेशय ।
त्वत्राहंयोजयाम्येनं कर्मिणन्त्वत्परायणम् ॥ १ ॥
प्राप्तानुज्ञस्तु शिष्याणां कुर्याद्वैतत्त्रयोजनम् ।
यत्रयत्रचतत्तेषा मवश्यं शाश्वतम्भवेत् ॥ २३२ ॥

इतिश्रीपांचरात्रे श्रीसात्वतसंहितायां अधिवासदीक्षाविधि रष्टादशः परिच्छेदः ॥ १८ ॥

## अथ एकोनविंशः परिच्छेदः ।

श्रीनारदः ।

अधिवासाभिधानेयं पूर्वदीक्षाच्युतेन वै ।
कथितासीारिणे विप्रा स्तेनाव श्रोदितः पुनः ॥ १ ॥

संकर्षणः ।

देव दीक्षाविधानं च त्वद्वक्त्रकमलाद् दहम् ।
श्रोतु मिच्छामि संक्षेपा द्वैष्णवानां हिताय च ॥ २ ॥

भगवान् ।

एकानेकस्वरूपां वै दीक्षां संसारिण श्रृणु ।
आसाद्य यां समायान्ति देहान्ते भि [ हि ] मतं पदम् ॥ ३ ॥
कैवल्यफलदाप्येका भोगकैवल्यदा परा ।
भोगदैव तृतीया च मबुद्धानां सदैवहि ॥ ४ ॥
आचार्यानुमता स्सर्वाः कार्या स्सम्यक्फलाप्तये ।
भक्तिभावानुविद्धानां शिष्याणां भावितात्मनाम् ॥ ५ ॥
वृद्धाना मंगनानां च बालानां भावितात्मनाम् ।
चिताचारसमृद्देन दुश्शकेन च-ता हिताः ॥ ६ ॥
पुरा धिया विचार्यैव मुपसन्नेन वै सह ।
तदीय माशयं ज्ञात्वा सम्पाद्यैका महामते ॥ ७ ॥
अथातीतेर्धरात्रेतु त्वाप्य शयना द्गुरोः ।
कमण्डलुं समादाय बहि रावम्य संविशेत् ॥ ८ ॥
संस्मरे द्व्रत आर्त्तं हुतभुग्राशिसन्निभम् ।
तदन्त स्संविशे देवं स्नानमात्रं कृतं भवेत् ॥ ९ ॥
निद्रामोहमलं येन शश्व द्यापाति संक्षयम् ।
शंकू न्वे घटिका स्तत्र रजास्यत्रयरेण च ॥ १० ॥
समादाय च संस्मृत्य निष्पिष्याये [धि] महीतले ।
शुष्कगोमयसंघृष्टे मण्डलं यत्पुरोदितम् ॥ ११ ॥
भद्रत्वपरिरक्षार्थ न्यस्याः कोणेषु शङ्कवः ।
कमलक्षमासिद्ध्यर्थं मेकं मध्ये निवेश्य च ॥ १२ ॥
ईपन्नयाति वैषम्यं तद्ग्रात्रिसमये यथा ।
महानूनाधिके दोष स्सशिष्यस्य यतो गुरोः ॥ १३ ॥
अत स्तद्रक्षणार्थं च यत्नेन महता सदा ।
निर्धार्य नित्यं प्रत्यूषे पुरा वै स्नानपूर्वकम् ॥ १४ ॥
शिष्य माहूय सम्बोध्य स्वप्नमालिं शुभाशुभाम् ।
चतुर्मूर्तिसमुद्रन्तु यथा त्रिरश्मितन्तु वै ॥ १५ ॥

पश्ये त्पद्मांक्तिनिविष्टं च उपविष्टन्तु चोत्थितम् ।
तन्मध्या द्भगवत्तत्व मेकं वा भिन्नलक्षणम् ॥ १६ ॥

प्रादुर्भावसमूहं च तल्लांछनगण श्च यः ।
दैवीयं वनितावृन्दं सर्व मेकत्तमाथवा ॥ १७ ॥
भयोपकरणव्रात मशेषं वा पृथक्स्थितम् ।
रुद्रेन्द्रचन्द्रसूर्याम्बु हुतभुग्वातलक्षणम् ॥ १८ ॥
पंचरात्रविदो विप्रा आराधनपरायणाः ।
त्रयी मुद्घोषयन्तश्च निगदन्तश्च वा द्विजाः ॥ १९ ॥

यतय श्शुद्धसत्वाश्च सद्ब्रह्मपदसंस्थिताः ।
मगस्रक्चन्दनाद्यानि सुगन्धानि तरूत्तमः ॥ २० ॥
उद्यानवनिताराम वापीहर्म्यमहालयम् ।
फलबीजौषधी सांबु कुम्भो वा पाकनिर्गतः ॥ २१ ॥
गोगजाश्च नदीयानं कन्या सालंकृता शिशुः ।
मंगलयगीति र्मधुरा भेरी वंशश्च वल्लरी ॥ २२ ॥

सक्षारलं सरः पद्मैः पूर्ण चित्रं सितं तत्म् ।
हेमादिधातवो रत्न जालं गोसम्भवानि च ॥ २३ ॥
नवो नेत्र स्थितं शुद्धं वस्त्रवृन्द मनाहतम् ।
राजा पुरोधा स्वामन्तो राजपत्नी च दर्पणम् ॥ २४ ॥
तुरगश्चैव सद्वृष्टि र्महामेघोदयो दिवि ।
शोणितश्चार्द्रमांसानि खप्लुति र्मंदिरादयः ॥ २५ ॥
सत्पक्षिमृगसंवाद स्सुरार्चा चामरं सितम् ।
एवमादीनि धान्यानि विद्धि सिद्धिप्रदानि च ॥ २६ ॥
स्वप्नानि यान्यनिष्टानि तानि मे लेशत श्शृणु ।
म्लानता क्षितिकम्पश्च उपरागोतिभीषणः ॥ २७ ॥
नीहार उल्कापातश्च निर्यात श्चित्तभंगकृत् ।
गर्तप्रवेशो दुष्यन्नं स्विन्नमांसस्य भक्षणम् ॥ २८ ॥

नर्तनं रथविध्वंस आज्यं स्वांगद्विजच्युतिः ।
खरोष्ट्रं चोत्कटं हास्यं कपिऋक्षाकुलं वनम् ॥ २९ ॥
स्थानं धूमाकुलञ्चैव मसिताम्बरवेष्टनम् ।
शुष्कत्वं सरिदादीनां प्रतिस्रोतस्त्वमेव च ॥ ३० ॥
पोतयानध्वजच्छत्र तरुभंगोप्यसिद्धिकृत् ।
अवतारो नगाद्वृक्षा अग्नत्वं प्रेतदर्शनम् ॥ ३१ ॥
बलाकजालवेष्टाप्यधेपो दातकर्दमे स्थितिः ।
महिषो हि नरः कृष्णो दक्षिणाशागमः क्षुधा ॥ ३२ ॥
लुञ्छनं नखकेशानां मस्थिभंगादिकं द्रुतम् ।
एवमादीनि चान्यानि अशुभानि महामते ॥ ३३ ॥
प्राप्ते शुभाशुभे स्वप्ने ह्यभिसन्धाय वै हृदि ।
औत्सुक्या दक्षिणान्तं पूजाहोमं समाचरेत् ॥ ३४ ॥
अथोक्तविधिना देव मवतार्य क्रमा यजेत् ।
तर्पयित्वा यथान्यायं पूर्णान्त श्वार्चयेत्ततः ॥ ३५ ॥
ईशकोणेथवा सौम्ये पदे यागगृहस्य च ।
मण्डले पूर्वनिर्दिष्टे वृत्ते वा चतुरश्रके ॥ ३६ ॥
स्नातं स्रग्वस्त्रभृच्छिष्यं कृतन्यासं निवेदयेत् ।
निरीक्ष्य ताड्य संप्रोक्ष्य दर्भैं रालभ्य पूर्ववत ॥ ३७ ॥
संस्कृत्य मूर्तिव त्किन्तु अनुगृह्य ध्रुवागतम् ।
आपदा न्मन्त्रहस्तेन परामृश्याथ मूर्धनि ॥ ३८ ॥
मन्त्रहस्तं ज्वलद्रूपं दद्यात् यो दुःखबीजजित् ।
त मादाय करा देव धामसन्निकटं व्रजेत ॥ ३९ ॥
कृतात्मनो वामभागे भूय स्संछाद्य लोचने ।
प्रक्षेपयेत्तथा साध्यं मञ्जलिं मुक्तलोचनम् ॥ ४० ॥
संपश्ये त्परमं धाम मान्त्र मच्छफलप्रदम् ।
तस्मि न्नवसरे कुर्या न्नाम यस्य यथोचितम् ॥ ४१ ॥

रहस्यसंज्ञं मुख्यं च गौणं वास्य यथास्थितम् ।
सामान्यं वासुदेवाद्य नाम स्वांग ऋतुर्ष्विव ॥ ४२ ॥
सर्वेषां सविशेष वा यथा चानक्रमेणतु ।
द्विषट्‌कमूर्त्यंकितं च स्वाम्यन्तं ब्राह्मणेषु च ॥ ४३ ॥
देवान्तं क्षत्रियाणां च कुर्या द्वादशधा पुनः ।
पाण्यन्तं धारनिष्ट वा लांछन चतुरस्सरम् ॥ ४४ ॥
ध्वजलांछनसंज्ञं च यथावस्थं नृपेषु च ।
एवं धर्मनिष्ठ च मूर्ति लांछनपूर्वकम् ॥ ४५ ॥
विहितं चापि वैश्यानां दासान्तं शूद्रजन्मनाम् ।
स्वधोधाय नमस्कृत्य मण्डलं कलश गुरुम् ॥ ४६ ॥
यायात् कुण्डसमीपे तु शिशुना सह देशिकः ।
कृतस्य कर्मणो छिद्रसिद्धये च हुते सति ॥ ४७ ॥
सन्ताड्यात्मकोभूत्वा प्रावसद्धृदयं विशेत् ।
प्राणशक्तिवियुक्तं च कृत्वानीय समाश्रवः ॥ ४८ ॥
संप्रवेश्य स्वकं स्थानं तत्राग्निकणवद्य तम् ।
नीयाः सम्यक्पृथग्भावं विरेच्य सह वायुना ॥ ४९ ॥
स्वागूमो वाममार्गेण हृदायन्तं निरोधितम् ।
जन्मग्रह मनेनेव मन्त्रयुक्तेन कर्मणा ॥ ५० ॥
भावध्यानानुविद्धेन पितृमातृमयं त्यजेत् ।
ततः कवचमन्त्रेण दद्या त्समाभिमन्त्रितम् ॥ ५१ ॥
तस्योपवीत मपर मुदितं चापि यस्य यत् ।
सर्वधा दासभावत्व मापन्नस्य च तत्त्वतः ॥ ५२ ॥
अमद्यपान्वयोत्थस्य लोकधर्मोज्झितस्य च ।
आमवद्ब्रह्मनिष्ठस्य च मंतन्त्ररतस्य च ॥ ५३ ॥
गोदान शूद्रजाते यें विहितं चैव नान्यथा ।
वौषट् स्वाहास्वधाकार निषेधान्तु प्रतिक्रिया ॥ ५४ ॥

नमस्कारेण मन्त्राणां कार्यं मामे ह्यनुग्रहे ।
तदीय मर्घ्यपुष्पाद्यं यत्किञ्चिद्यागसाधनम् ॥ ५५ ॥
सुसंस्कृत मसिद्धं वा भक्त्या कर्मण्यतां व्रजेत् ।
अतोऽन्येषान्तु भक्तानां विहिता यागसाधने ॥ ५६ ॥
कर्म्यवस्तवनिवृत्तिः सा स्वदर्शनं प्रोक्षणान्वितम् ।
मूर्तौ वा मण्डलाग्रेतु पुष्पक्षेपं प्रदापयेत् ॥ ५७ ॥
नक्तं वा परिपीडं च व्रतार्थं त्वेकमेवहि ।
एवं संस्कारसंशुद्धं कृत्वा वर्णगणं पुरा ॥ ५८ ॥
वाग्नेन विधिना कुर्यात् तत्प्रायश्चित्ततर्पणम् ।
वदशांशसहस्रन्तु यथा च नुक्रमेण तु ॥ ५९ ॥
गत्वाभ्यर्च्य च कुम्भेशं सूत्र मादाय तत्स्थितम् ।
ऋजुभूतं शिशुं कृत्वा तद्वासूत्रं प्रचार्य च ॥ ६० ॥
व्यक्तरूपं च मन्त्रेशं संस्मरे दग्निमध्यगम् ।
पश्ये द्विभौ शिशुं सूत्रे स्वात्मन्यध्वान मञ्जसा ॥ ६१ ॥
तत्राध्वात्मस्वरूपं च संस्मरे न्मन्त्रदेहगम् ।
अधिदैवस्वभावं च तस्यात्मन्यवतार्य च ॥ ६२ ॥
अधिभूतमयं सूत्रे त्रिविधं शिष्यविग्रहे ।
मूलमन्त्रावसानेतु सनमस्कं परात्मने ॥ ६३ ॥
पदं कृत्वातु जुहुया दाहुतीनां चतुष्टयम् ।
तथा सूक्ष्मात्मने चोक्त्वा तत स्स्थूलात्मने तु वै ॥ ६४ ॥
सर्वात्मनेच्च तदनु तत्रोर्ध्वतिचयं द्विजम् ।
आपदाग्रा च्छिरान्तं च सर्वं ध्यात्वा स्वदेहगम् ॥ ६५ ॥
यथोद्दिष्टं क्रमेणैव विभिन्नं त्रिविध त्वपि ।
रचनासन्निवेशो यः क्ष्मादीनां चाधिभूतता ॥ ६६ ॥
बोद्धस्य मधिदैवत्वं सामर्थ्यं यस्य यत् स्वकम् ।
तदधिष्ठातृमन्त्राणा मध्यात्मत्वं विधीयते ॥ ६७ ॥

अथ मार्गद्वयं त्यक्त्वा द्वादशान्तं समाश्रयेत ।
मूलमन्त्रमयो भूत्वा संव्रजे त्स्वधिया ततः ॥ ६८ ॥
ब्रह्मद्वारपदं शिष्यं तत स्तन्मध्यवर्त्मना ।
पार्थिवं पद माक्रम्य कुर्या त्तच्छक्ति मात्मसात ॥ ६९ ॥
बीजभूतां च हृन्मन्त्र संरुद्धां सन्धिविग्रहाम् ।
नानाण्डबीजसंयुक्ता मनेकरचनान्विताम् ॥ ७० ॥
एव मादाय वै सर्वा बुद्धिनिष्ठास्तु शक्तयः ।
पृथक्पृथक्क्रमेणैव तस्मिन् हृन्मन्त्रसम्पुटे ॥ ७१ ॥
स्वेनाध्यात्मगुणेनैव परेण व्यापकात्मना ।
तद्देहं धारयन्तश्च स्मरे त्तमुभयात्मकम् ॥ ७२ ॥
कालं भोगक्षयान्तं च तावाकाङ्क्षात्तु महामते ।
कृत्वैवं भूतशक्तीनां संहारं शिशुविग्रहात ॥ ७३ ॥
सौवं देह मथाक्रम्य सम्य क्तेनैव वर्त्मना ।
प्रोल्लसं स्तद्व्रजे तत्र व्यञ्जयेत्तु धियादिषत ॥ ७४ ॥
आदायाध्यात्ममन्त्रांश्च भूतभूतान्विता नथ ।
निये ईलक्षणे शुद्धे स्वमन्त्रे स्वस्थितानपि ॥ ७५ ॥
अथ स्रुवा द्विनिष्क्रम्य प्रयाया दनलाश्रयम् ।
तत्रावयवसन्धानां मन्त्रसाम्यं समाचरेत ॥ ७६ ॥
समाहृतानां मन्त्राणां परे सर्वक्षलक्षणे ।
व्यापके सर्वसामान्ये कृत्वा स्वे स्वे पदे स्थितिम् ॥ ७७ ॥
स्वशरीर मथासाद्य ब्रह्मद्वारेण देशिकः ।
स्रुव मादाय सन्तर्प्य मन्त्रवृन्दं यथोदितम् ॥ ७८ ॥
तत्ववृन्दसमेतं च स्वनाम्ना प्रणवादिना ।
भूपसंस्तृष्टियोगेन द्विषट्कपरिसंख्यया ॥ ७९ ॥
पूरकेन समाकृष्य शिष्यं हृत्कमलाद्धृदि ।
अथ व्यक्तिनिरस्तं च क्ष्माबीजं परलक्षणम् ॥ ८० ॥

द्वाशत्तया ज्ञानसंरुद्धं कृत्वादायानळा हृदि ।
प्रणवासनविश्रान्तं विरेच्याब्जे तु शैशवे ॥ ८१ ॥
स्मृत्वाथ शिष्यचैतन्य मेकमेव द्विरूपधृक् ।
शक्तिमच्छक्तिभावेन शक्तित्वेनतु संस्मरेत् ॥ ८२ ॥
क्ष्मातत्वान्तर्गतंकुण्डे शक्तिमत्वेन सत्पुनः ।
रेचयित्वा स्वनाम्नाथ विग्रहे मध्यवर्त्मना ॥ ८३ ॥
नियोज्यतत्समाधौतं जपध्यानैक लक्षणे ।
तदेवपार्थिवंबीजं हृदाथै होमकर्मणा ॥ ८४ ॥
सम्यक् तस्योपकारार्थं नेतव्यं सूक्ष्मदेहताम् ।
स्वाहान्तं भोगसिद्ध्यर्थं नमोन्तं मोक्षसिद्धये ॥ ८५ ॥
भोगमोक्षार्थिनेचापि तदेवोभयलक्षणम् ।
कर्मणामक्षस्थानेतु सम्पाद्य पदंन्यसेत ॥ ८६ ॥
एवन्तु विग्रहेसूक्ष्मे तद्रूपस्य गतस्यच ।
शिरसाचाधिकारात्तु तस्यापाद्य यथास्थितम् ॥ ८७ ॥
शिखामन्त्रेणतद्भोगं निर्वाप्यशतसंख्यया ।
वर्मणातत्फलमाप्तिं तल्लयत्वमपिस्मरेत् ॥ ८८ ॥
सुवृत्तिमयनेत्रेण कुर्यात्तेनैवसंस्थितिम् ।
तत्त्यागश्चास्त्रमन्त्रेण विश्लेषेण युतोभवेत् ॥ ८९ ॥
मूलेनाथगृहीत्वातत् कुर्याच्चैवात्मसात्पुनः ।
तद्रूच्छक्तिं तदीयांच कुण्डाद्व्यापकलक्षणाम् ॥ ९० ॥
क्ष्मातत्वस्याथवा [ सा ] च्चस्य ह्रासा [ ना ] धारस्यशान्तये ।
पूर्वसंख्यन्तुचास्त्रेण कृत्वाहोमं महामते ॥ ९१ ॥
स्रुवमाज्येन सम्पूर्य स्कन्धसूत्रात्तु पार्थिवम् ।
विकार्यपूर्णयासार्द्धं विलाप्याग्नौ स्वकेपदे ॥ ९२ ॥
मूलमन्त्रेणसद्वसा हत्पद्मेरितेनतु ।
स्वदेहाद्रेचकेनाथ मेयशक्तिचशैशवम् ॥ ९३ ॥

तयाऽऽक्रान्तं मयस्थंच संस्मरे द्व्यक्तिरिक्तया।
कश्चिन्तुनेवाब्जपत्र माघाय्वानंचभोवनम् ॥ ९४ ॥
शिष्यदेहेनिरुद्धस्य व्यक्तिक्रोडी कृतस्यच।
स्वशक्तिपरिपूर्णस्य क्ष्माबीजस्यत्वथोपरि ॥ ९५ ॥
विरेच्यशक्तिमन्तश्च व्यस्तधर्मेणपूर्ववत्।
तत्क्षणेबीजसंस्थन्तु अध्यानन्तुयथास्थितम् ॥ ९६ ॥
प्रकाशयन्तंकृपया तद्वायन्तस्यसिद्धये।
विरक्तभावयेच्छिष्यं चिन्तयेत्तदिदान्विधा ॥ ९७ ॥
इदन्तत्पार्थिवन्तत्वं बुधावेदुःखपंजरम्।
भावतावं गतचास्य सुमहत्त्वं च सांप्रतम् ॥ ९८ ॥
कथमत्रावद्धचार्स यस्येमेनतताइमाः।
विमुक्तःपंजराद्बद्ध स्सुखमास्तेविहंगमः ॥ ९९ ॥
ऊर्ध्वपातीतदारूढ स्सेवमन्त्रबलाच्छिशुः।
समूहमथविश्राम्य तत्प्रभुत्वेनयस्थितः ॥ १०० ॥
सन्निरुद्धो भवेत्स्वस्य सर्वतस्सर्वदेवहि।
युष्मत्प्रसाद सामर्थ्यां यथावत्पार्थिवोगुणः ॥ १ ॥
देहान्तं गन्धतन्मात्रं भवेदासीनमस्यवै।
सम्यक्संप्रतिपन्नस्य शासनेपारमेश्वरे ॥ २ ॥
हेधराधिपतेनाथ अस्याद्य प्रभृतित्वया।
ध्वसिनामोक्षविघ्नानां भवितव्यंचकर्मिणः ॥ ३ ॥
इतिविज्ञाप्यचाज्ञाप्य आपाद्याहुतयःक्रमात्।
सहशक्त्यासमाकृष्य भूयस्तत्पूरकेणतु ॥ ४ ॥
तद्देहेचामयंबीजं साधारंपूर्ववन्न्यसेत।
कुण्डमध्येनुसन्धाय जीवशक्तिंच पूर्ववत् ॥ ५ ॥
विरेच्य शक्तिमां स्तत्र नियोज्य स्तदनन्तरम्।
तासमाधौ यथा पूर्वं कुम्भकेन महामते ॥ ६ ॥

अथान्यं देह मापाद्य होमध्यानादिना परम् ।
तत्राधिकारपूर्वन्तु सर्वं निर्वर्त्य तस्य वै ॥ ७ ॥
अन्येन सूत्रस्कन्धेन सह पूर्वा निपात्य च ।
आसत्वपदसंयुक्तं तेनाक्रान्तं स्मरे त्तथा ॥ ८ ॥
शारथं मन्त्रसमूहन्तु सह तत्पतिना तु वै ।
पूर्वंयच्चूयावियेया च रस माह्यम्य गन्धवत् ॥ ९ ॥
मनोबलानं नीत्वैवं तं वर्णाध्वोर्ध्वगोचरम् ।
निष्ठागेन महाबुद्धे तेजसास्त्रेण चेच्छया ॥ ११० ॥
समुद्धृत्याथ वै प्राग्वत् यवतव्यं बुद्धिगोचरे ।
षडध्वमुक्तमूलेन प्राप्तसंज्ञं च तं शिशुम् ॥ १ ॥
तात्पर्यंकचुकनिर्मुक्तं शान्तात्मन्येकतां गतम् ।
स्मृत्वा शान्यात्मना प्रोतु कल्पलक्षे पदे परे ॥ २ ॥
षेश्वरेणतु बीजेन भोक्तसायान्वितेन च ।
तत स्संयेद्य निर्मुक्तिं समाधौ विनियोज्य च ॥ ३ ॥
नवेत्ति यत्र संलीनं सानन्दं द्वैतमात्रकम् ।
आहुतीनां शतं कृत्वा तदापादनकर्मणि ॥ ४ ॥
नीत्वा समानतां सर्वं तेनैव स्वधिया खिलम् ।
सह संयेद्य जालेन वाक्प्रबन्धं यथा स्थितम् ॥ ५ ॥
निस्तरंगमयीं भूत्वा दत्वा स्पूर्णाहुतिं पराम् ।
अथास्थितां प्राप्य गुरुः प्रदद्या दाहुतीः पुनः ॥ ६ ॥
बीजनाथेन शिष्यस्य त्वपमोक्षानिवृत्तये ।
पदे रोंकारसंरुद्धैः पदार्थस्थितमानसः ॥ ७ ॥
सर्वज्ञो भव चोत्तवैवं जुहुयात् द्वादशाहुतीः ।
भवैवमेष भगव न्निरवद्यो निराश्रयः ॥ ८ ॥
सर्वेश्वर स्सर्वशक्ति स्सुसम्पूर्णो च्युतो वशी ।
व्यापी निरुद्धषाड्गुण्यो निर्विकारो निरञ्जनः ॥ ९ ॥

नित्यो नित्योदितज्ञानो नित्यानन्द स्सुनिष्कळः ।
अनाद्यन्तो ऽ निधनो वासुदेवो विभूतिमान् ॥ १२० ॥
भूयैवञ्च ततः कुर्या त्पूर्णया पुनरेवहि ।
स्थितं येभवदीक्षाया न्मुमुक्षो रैश्वरे पदे ॥ १ ॥
यत्रस्थो धाम चाभ्येति ह्यचिरा त्पारमेश्वरम् ।
ईश्वरेच्छावशेनैव देहपाता न्महामते ॥ २ ॥
भोगेच्छोः पद्मनाभीय उभयेच्छोः पदद्वये ।
शक्तिमच्छक्तियोगेन त्वथ बुद्धिमयेध्वनि ॥ ३ ॥
निवेश्यो देहपातान्तं काल मुद्धृत्य तत्पदात् ।
अन्तरूढो यथा काष्टा त्पावकश्च पृथक्कृतः ॥ ४ ॥
न भूय स्सह काष्ठेन साम्य मेति तथा पुमान् ।
योजितो ध्वान्तरे भूयो नैति तन्मयतां ततः ॥ ५ ॥
समाधिमच्युतं कृत्वा विनिवेश्यात्मनोग्रतः ।
यथावदुपदेष्टव्य स्तस्याध्वाच सिताসিतः ॥ ६ ॥
सस्थितो य स्वभेदेन भिन्नरूपः परात्मनि ।
येधवेदकनिर्मुक्त मच्युतंब्रह्मयत्परं ॥ ७ ॥
तच्छब्दब्रह्मभावेन स्वशक्त्यास्वयमेवहि ।
मुक्तयेखिलजीवाना मुदेतिपरमेश्वरः ॥ ८ ॥
तदव्यक्ताक्षरविद्धि तन्त्रीशब्दोयथाकळः ।
पृथग्वर्णात्मनायाति स्थितयेनैकधास्वयं ॥ ९ ॥
नौयान्तिनिश्चययत्र चातुरात्म्यादनुग्रहात् ।
ऋतेवेदविदोविप्रा स्त्वेतस्मिन् प्रथमेक्षरे ॥ १३० ॥
सशब्दमूर्तिर्भगवा नभ्येतिचकलात्मना ।
तद्गृह्योयुज्यतेयेन तन्निष्ठानां हि कर्मिणां ॥ १ ॥
नयाद्गुण्यमळोत्याच यावन्मूर्ति निरञ्जनम् ।
बद्धेनान्यथामूर्त ततगृहीतुं नियुज्यते ॥ २ ॥

तावाःकलामयास्सर्वे प्रभवाप्ययलक्षणाः ।
पूर्वोक्ता वासुदेवाद्या अद्धचक्षान्तायथोदिताः ॥ ३ ॥
तेभ्योविनिर्गतामन्त्रा स्त्वणिमादि गुणैर्युताः ।
षट्कलांगलवैर्युक्ता येपुसंख्यानावियते ॥ ४ ॥
व्याप्तितन्तै स्सानिर्माणं तस्याद्यं पदसंज्ञकम् ।
कर्मिणामात्मलाभार्थं मोहार्थंतवक्षयायच ॥ ५ ॥
द्विस्सप्तभुवनंविश्वं गुणत्रयमयंहियत् ।
तदशुद्धंजगन्नित्यं भोग्यंप्राप्यं पृथक्स्थितम् ॥ ८ ॥
इत्यध्वषट्कमुद्दिष्टं हेयोपादेयलक्षणः ।
भुवनाध्वापदाध्वाच विनातुर्यपदेनतु ॥ ९ ॥
हेयशेषमुपादेयं कर्मिणान्तदपेक्षया ।
ह्यपेक्षया ह्युपेयश्च हेयपक्षे प्रयातिच ॥ १४० ॥
किन्तुतत्प्राप्त्युपायंवै निस्तारंपरेपदे ।
विवेकपदसंस्थस्य दीक्षयासंस्कृतस्यच ॥ १ ॥
विचार्यमाणएवंहि विभ्रामोपत्रवैस्फुटम् ।
जायतेतत्परंब्रह्म वासुदेवाख्यमव्ययम् ॥ २ ॥
अम्बरंपरमाणूनां ब्रह्मनामोऽस्पदंयथा ।
तथानाद्यप्रबुद्धानां जीवानांहि निकेतनम् ॥ ३ ॥
विज्ञेयम्भुवनानांच पदानामन्तरंहियत् ।
विनेश्वरेच्छया तेषां मन्त्राये क्रीडयन्तिच ॥ ४ ॥
मायायेध्वद्वयेतस्मिन् सुखदुःखमयैःफलैः ।
ईश्वरेच्छानुविद्धानां भक्तानांपरमेश्वरे ॥ ५ ॥
गुरूणांदीक्षितानांचा प्याराधनरतात्मनाम् ।
भवन्त्यध्वद्वयोर्ध्वस्था मन्त्राश्चाज्ञाप्रतीक्षकाः ॥ ६ ॥
नयन्तिकर्मणस्सम्यक् मायीयाध्वद्वयाद्बलात् ।
स्वस्थानमणिमादीनां भोगानां प्रापयेत्तुवै ॥ ७ ॥

नित्यो नित्योदितज्ञानो नित्यानन्द स्तुनिष्कळः ।
अनाद्यन्तो ऽनिधनो वासुदेवो विभूतिमान् ॥ १२० ॥
भूर्वैभव तत: कुर्या त्पूर्णया पुनरेवहि ।
स्थितं वैभवदीक्षाया म्मुमुक्षो रैश्वरे पदे ॥ १ ॥
यत्रस्थो धाम चाभ्येति ह्यचिरा त्पारमेश्वरम् ।
ईश्वरेच्छावशेनैव देहपाता न्महामते ॥ २ ॥
भोगेच्छोः पद्मनाभीय उभयेच्छोः पदद्वये ।
शक्तिमच्छक्तियोगेन त्वथ बुद्धिमयेऽध्वनि ॥ ३ ॥
निवेश्यो देहपातान्तं काल मुद्धृत्य तत्पदात् ।
अन्तरूढो यथा काष्ठा त्पावकश्च पृथक्कृतः ॥ ४ ॥
न भूय स्सह काष्ठेन साम्य मेति तथा पुमान् ।
योजितो ध्वान्तरे भूयो नैति तन्मयतां ततः ॥ ५ ॥
समाधिमच्युतं कृत्वा विनिवेश्यात्मनोऽग्रतः ।
यथावदुपदेष्टव्य स्तस्याध्वाच सितासितः ॥ ६ ॥
स्स्थितो य स्त्वभेदेन भिन्नरूपः परात्मनि ।
वेधयेदक्षनिर्मुक्त मच्युतंब्रह्मयत्परं ॥ ७ ॥
तच्छब्दब्रह्मभावेन स्वशक्त्यास्वयमेवहि ।
मुक्तयेखिलजीवाना मुदेतिपरमेश्वरः ॥ ८ ॥
तदव्यक्ताक्षरविद्धि तन्त्रीशब्दोयथाकुल. ।
पृथग्वर्णात्मनायाति स्थितयेनेकधास्वयं ॥ ९ ॥
नोयान्तिनिश्चयंयत्र चातुरात्म्यादनुग्रहात ।
ऋतेवेदाविदोविप्रा स्तवेतस्मिन् मयमेक्षरे ॥ १३० ॥
सशब्दमूर्तिर्भगवा नभ्येतिचकलात्मना ।
तद्गृह्योयुज्यतेयेन तन्निष्ठानां हि कर्मिणां ॥ १ ॥
नपाड्गुण्यमलोत्थाच यावन्मूर्ति निरञ्जनम् ।
यद्गेनान्यथामूर्त ततगृहीतुं नियुज्यते ॥ २ ॥

तत्वाःकलामयास्सर्वे प्रभवाप्ययलक्षणाः ।
पूर्वोक्ता वासुदेवाद्या अद्वयशान्तायपेरिताः ॥ ३ ॥
तेभ्योविनिर्गतामन्त्रा स्त्वणिमादि गुणैर्युताः ।
षट्कलांगळवैर्युक्ता येपुसंख्यानविग्रहे ॥ ४ ॥
व्यापितन्तै स्तानिर्माणं तस्याद्यं पदसंज्ञकम् ।
कर्मिणामात्मलाभार्थं मोहार्थंतत्क्षयायच ॥ ५ ॥
द्विरस्तसभुवनंविश्वं गुणत्रयमयाहियत ।
तदशुद्धंजगन्नित्यं भोग्यंप्राप्यं पृथक्स्थितम् ॥ ८ ॥
इत्यध्वषट्कमुद्दिष्टं हेयोपादेयलक्षणः ।
भुवनाध्वापदाध्वाच विनातुर्यपदेनतु ॥ ९ ॥
हेयशेषमुपादेयं कर्मिणान्तदपेक्षया ।
व्यपेक्षया प्युपेयश्च हेयपक्षे प्रयातिच ॥ १४० ॥
किन्तुतत्प्राप्युपायंवै निस्तरंश्चपरेपदे ।
विवेकपदसंस्थस्य दीक्षयासंस्कृतस्यच ॥ १ ॥
विचार्यमाणएवंहि विश्रामोयत्रवैस्फुटम् ।
जायतेतत्परंब्रह्म वासुदेवाख्यमव्ययम् ॥ २ ॥
अम्बरंपरमाणूनां ब्रह्मनामास्पदंयथा ।
तथानाद्यप्रबुद्धानां जीवानांहि निकेतनम् ॥ ३ ॥
विज्ञेयम्भुवनानांच पदानामन्तरंहियत् ।
विनेश्वरेच्छया तेषां मन्त्रावै क्रीडयन्तिच ॥ ४ ॥
मार्गायेष्वद्वयेतस्मिन् सुखदुःखमयैःफलैः ।
ईश्वरेच्छानुविद्धानां भक्तानांपरमेश्वरे ॥ ५ ॥
गुरूणांदीक्षितानांचा प्याराधनरतात्मनाम् ।
भवन्त्यध्वद्वयोर्ध्वस्था मन्त्राश्चाज्ञाप्रतीक्षकाः ॥ ६ ॥
नयन्तिकर्मणस्सम्यक् मायीयाध्वद्वयाद्बलात ।
स्वस्थानमणिमादीनां भोगानां प्रापयेतुवै ॥ ७ ॥

विरतस्यचतद्भोगात् स्वशक्त्या प्रेरयन्विच ।
स्वव्यापारवशेनापि तत्वाध्वन्यमृतोपमे ॥ ८ ॥
यन्त्राणीमानिमन्येत, तृणानीवचर्सस्थितः ।
अनुग्रहपरास्तस्य तत्वाद्यक्षादयोमलाः ॥ ९ ॥
नयनयष्ययतांसम्यक् सकलाध्वनिशाश्वते ।
सषाड्गुण्यमयोब्रह्म वासुदेवोऽखमूर्तिभृत् ॥ १५०॥
नित्येस्वात्मनिसम्बन्धे शब्दब्रह्माभिधेध्वनि ।
करोति योजनान्तस्य पवस्य स्स्वयमेव हि ॥ १ ॥
प्राप्नोति तत्परिज्ञानात् सुशान्तं भगवत्पदम् ।

संकर्षणः ।

देववर्णाध्वविज्ञानं यद किं लक्षणं मम ॥ २ ॥
प्राप्नोति यत्परिज्ञाना दृश्वी सद्वासुदेवताम् ।

श्रीभगवान् ।

पश्चाध्वकोशमुक्तस्य लब्धसत्तस्य चात्मनः ॥ ३ ॥
सोनुभूतिपद याति धरासन्तानरूपधृत ।
भिन्नवर्णमय श्शब्दः पूर्वलक्षणलक्षितः ॥ ४ ॥
सचातुरात्म्यनिचयो विज्ञेयोहि तदात्मना ।
प्रभवाप्यययोगेन शब्दभास्वरलक्षणः ॥ ५ ॥
लकारान्तस्सवकाराद्य हकारा दन्त एव हि ।
प्रभवे द्वादशान्तस्तु अकार श्चतुरात्मनाम् ॥ ६ ॥
अकार स्सवप्ययेनैव तुल्यतातोनयो स्स्मृता ।
वर्णे व्यूहसमूहोस्मिन् ज्ञेयं ज्ञानसमाधिना ॥ ७ ॥
विश्राम टदयो व्यापि रराव्यासुच देवताः ।
अवैवैका परिज्ञेया मूर्ति र्वै त्वेयमेव हि ॥ ८ ॥
युक्ता विश्रामपूर्वेण चतुष्केण समासतः ।
दण्डवात्सन्निवेशेन संस्थिता द्वेव मयहि ॥ ९ ॥

द्विपट्कं धारणानां च द्वादशाधात्मलक्षणम् ।
सोपानभूतं यत् क्रान्त्वा द्वादशान्तं विशेत्परम् ॥ १६० ॥
मीशैयं व्यक्तिभावेन हृत्पद्मोदरसंस्थितम् ।
यर्णाध्वानं दीक्षितस्य शब्दब्रह्मेति यास्थितिः ॥ १ ॥
संसेच्य हुतभुग्भूमिं मार्णीतेनोदकेनतु ।
सह शिष्येण चात्मानं तेनैवाच्छिद्रसिद्धये ॥ २ ॥
पूर्वयज्ञतिना कृत्वा लक्ष्म चाग्निं प्रणम्य च ।
समुत्थाय ततो याया सं गृहीत्वाच्युतालयम् ॥ ३ ॥
पूजयित्वा जगन्नाथं निवेद्य नियमा च्छिशोः ।
सविशेषान् समासेन सान्तरान्योग्यतावशात् ॥ ४ ॥
यथावदुपदेष्टव्यं तत स्तस्यार्चनं हृदि ।
मुद्रासमन्वितो मन्त्री न्यासध्यानपुरस्सरः ॥ ५ ॥
इति कर्तव्यता शास्त्र संक्षिप्ता च सविस्तरा ।
तासमक्षं तत स्तेन सर्वं कार्यं यथास्थितम् ॥ ६ ॥
गुर्वर्चनं ततः कुर्यात् आत्मना द्रव्यनादिना ।
पूरयित्वांभसा पाणि मर्घ्यपात्रात्तु दक्षिणम् ॥ ७ ॥
षडंगमन्त्रसंजप्तं क्षेप्तव्यं तस्य मस्तके ।
मण्डलं प्रणवेनाथ पाणौ सूर्यप्रभं स्मरेत् ॥ ८ ॥
तत्राभिन्नं न्यसे त्प्राग्व द्वैभवं देवतागणम् ।
कृत्वा धियार्चितं दद्यात साशिषं तस्य मूर्धनि ॥ ९ ॥
यथोक्ताच यथाभीष्ट मचिरादेव पुत्रक ।
तथास्तु वैभवी सिद्धि र्मोक्षलक्ष्मसमन्विता ॥ १७० ॥
इति वैभवदीक्षाया लक्षणं समुदाहृतम् ।
तत्प्रयुक्तस्य सामान्यं सर्वमन्त्रगणस्य च ॥ १ ॥
येन येन हि मन्त्रेण दीक्षा कार्याहि कस्यचित ।
तस्य तस्य तदीयानां पूर्वोद्दिष्टेन वर्त्मना ॥ २ ॥

कार्यात्रावयवानान्तु विनियोगो यथोदितः ।
समूहवद्व्रूहादीनां ज्ञानान्तानां समाचरेत ॥ ३ ॥
सह तत्वगणेनैव सर्व मध्यात्मरूपता ।
समभ्यूह्य ततः कुर्या त्मात्वदभ्यर्चनन्तु वै ॥ ४ ॥
नेत्रकर्मणि हृद्बीज पश्चांगानां विधीयते ।
निरंगानांतु मन्त्राणा मंगमन्त्रोक्तकर्मणाम् ॥ ५ ॥
प्रणवो विनियोक्तव्य स्सहकर्मपदेनतु ।
सम्पाद्य विधिनानेन व्यूहदीक्षार्थिनां सदा ॥ ६ ॥
किन्तु मे तत्र योक्तव्यं प्रत्येकस्मिन् हि कर्मणि ।
चतुष्कं वासुदेवाद्यं बीजानां यत्पुरोदितम् ॥ ७ ॥
एवमेवाद्यमन्त्रस्तु निश्शेषः कर्मसंग्रहे ।
योक्तव्यो ब्रह्मदीक्षायां षोढाभक्त्वाच पूर्ववत् ॥ ८ ॥
स्वरूपेण यथावस्थ मुक्ते ष्ववसरेषु च ।
किन्त्वेकवचनेनात्र देवानां प्रार्थना मता ॥ ९ ॥
योजना त्वधिवासोक्ता विज्ञातव्या समासतः ।
नित्यदीक्षाद्वयस्यास्य नान्यन्मोक्षा हते फलम् ॥ ८०१ ॥
तत्रापि चातुरात्मीया दीक्षा स्यात्कमलेक्षण ।
यथा ददाति षाड्गुण्य भोगांस्तु भावितात्मनाम् ॥ १ ॥
फलं स्रक्चन्दनादीनां होमद्रव्यस्य चापि यत् ।
क्रिया सह चाप्नोति विलयं ब्रह्मदीक्षया ॥ १८२ ॥

इति श्रीपांचरात्रे श्रीसात्वतसंहितायाम्
दीक्षाविधि नाम

## एकोनविंशः परिच्छेदः ॥ १९ ॥



## अथ त्रिंशः परिच्छेदः ।

नारदः ।

दीक्षालक्षणमुक्तैवं सिरिणश्चाधिचक्रभृत ।
यथावच्चमुनिश्रेष्ठाः पुनरेवाब्रवीदिदम् ॥ १ ॥
अथमण्ड [ णं ] स्यदृष्ट [ त्र ] स्य शास्त्रज्ञस्ययथार्थतः ।
तप्ताभ्यां शंखचक्राभ्यां मंकितस्य भुजद्वये ॥ २ ॥
सम्यग्धृतोर्ध्व पुण्ड्रस्य दत्तनाम्नश्च मन्त्रिणः ।
समाराधनसक्तस्य पुत्रस्यश्चगतस्यच ॥ ३ ॥
सिद्ध्यर्थंसर्वमन्त्राणा मधिकारामपेक्षुषा ।
तत्कालंगुरुणाकार्य यच्छिष्यस्याभिषेचनम् ॥ ४ ॥
भगवद्भक्तियुक्तानां पंचकालरतात्मनां ।
संहितापारगाणांच आचार्याणांचसन्निधौ ॥ ५ ॥
यतीनांचद्धलक्षाणां साधकानां महात्मनाम् ।
अथकुर्याद्गुरुस्सम्य क्चतुरश्रन्तुमण्टपम् ॥ ६ ॥
सर्वोपकरणोपेतं मध्येभद्रासनान्वितम् ।
तस्मिन्कुर्यादनन्ताद्यं सन्धानमयासनोदितम् ॥ ७ ॥
पूजयित्वार्घ्यपुष्पाद्यै स्ततोदेवस्यसम्मुखम् ।
बद्धपद्मासनंशिष्यं तत्रारोप्यकृतांजलिः ॥ ८ ॥
कान्ताभिर्गीयमानन्तु स्तूयमानश्चवन्दिभिः ।
शंखाद्यैर्ध्मायमानन्तु पठ्यमानःतुमंगळैः ॥ ९ ॥
जपमानंपरम्मन्त्रं ध्यायमानामिवाच्युतम् ।
अष्टांगेनार्चयित्वात कुम्भमादायवैष्णवम् ॥ १० ॥
सतत्रस्थेनमन्त्रेण सम्यक्सिद्धिव्यपेक्षया ।
सहस्रावर्तितंकृत्वा शतावर्तितमेवया ॥ ११ ॥

सिद्धयेद्रुतहेमाभं स्मृत्वातमभिषिच्यच ।
स्वाहान्तम्मन्त्रमुच्चार्य प्लुतंहृत्कमलोदरात ॥ १२ ॥
एवमुक्त्वानमोन्तन्तु ध्यात्वातंस्फटिकामलम् ।
उद्गीर्यकर्णरन्ध्रेण तस्यहृत्पद्मगंस्मरेत् ॥ १३ ॥
चिच्छक्तिविग्रहंब्रह्म स्वाह्लादानन्दलक्षणम् ।
समारोप्यधियासम्य क्स्वाधिकारन्तुचाखिलम् ॥ १४ ॥
प्रतिपाद्यार्चितंशुद्धं दिव्यमागमसंचयम् ।
शुभमाराधनाधार मक्षसूत्रंचकिंकिणीम् ॥ १५ ॥
स्रुक्स्रुवौयोगपट्टंच शंखचक्रैकमण्डलुम् ।
चमसंसार्घ्यपात्रंच दर्भान्कृष्णाजिनन्तथा ॥ १६ ॥
पादुकेपादपीठंच च्छत्रमासनदर्पणे ।
मायूरंव्यजनंशुक्लं चामरंभगवद्ध्वजम् ॥ १७ ॥
यथार्हदण्डसहितं काषायेक्षौमवाससी ।
समुत्थाप्यासनात्सर्वं माहात्म्यस्नानजंजलम् ॥ १८ ॥
विनिक्षिप्यशुचौस्थाने देवमभ्यर्च्ययेत्ततः ।
तादर्थ्यैनतुसन्तर्प्य पूर्णांतंचाग्निमध्वगम् ॥ १९ ॥
स्नानवापूर्वोक्तविधिना सकुण्डान्मण्डलान्तरात् ।
अर्घ्यपात्रसमूहाच्च बलिदानंसमाचरेत् ॥ २० ॥
सोदकेनचभूताना मोदनेनाग्रमुच्चरन् ।
बलिंमण्डलतःकृत्वा यागागाराच्चबाह्यतः ॥ २१ ॥
कृत्वान्तर्बलिदानन्तु प्रादक्षिण्येनवैपुरा ।
अथऊर्ध्वंददेचोक्त्वा शेषन्तन्मण्डलेबहिः ॥ २२ ॥
नमोस्तवच्युतभूतेभ्य स्सर्वेभ्यस्सर्वदेवहि ।
सदिक्पतिभ्यस्सास्त्रेभ्य श्शान्ति[redacted]स्त्वस्यवैशिशोः ॥ २३ ॥
पूजायमुपसंहृत्य दत्तशिष्टेनपूर्व[redacted]र् ।
युतमण्डलमायेतु सितपद्मो[redacted]ततः ॥ २४ ॥

दत्तशिष्टैर्यजेद्देवं सर्वदेवगुरुंप्रभुम्।
तर्पयित्वाग्निमध्येतु कुर्यात्तस्यविसर्जनम् ॥ २५ ॥
तदीयमथनिक्षिप्य क्ष्मावटेवाजलांतरे।
करकंवारिसम्पूर्ण मपरंशुभलक्षणम् ॥ २६ ॥
सचेष्टार्वीर्यमन्त्रेण मध्येमन्त्रास्त्रमुत्तमम्।
मध्वम्बुपयसापूर्ण मादायविनिवेश्यच ॥ २७ ॥
तदग्रतोर्घ्यकलशं तन्मध्येस्त्रंचचक्रगम्।
समभ्यर्च्यपयान्यायं कृत्वाष्टशतमन्त्रितम् ॥ २८ ॥
वषट्पदनिरुद्धेन मूलमन्त्रेणतत्पुनः।
दद्यात्तदन्तरस्त्रार्णेन प्राग्वत् पीयूषधारिणम् ॥ २९ ॥
निर्निद्रीकरणंकुर्यात् सर्वेषांमन्त्रवारिणा।
तदम्बुधारादानेन ध्यानोच्चारयुतेनच ॥ ३० ॥
संविभज्याथदैवेषां मन्त्रपानं सुधामयम्।
सुधायस्त्रवरंपश्चा त्तमन्त्रं चक्रगंन्यसेत् ॥ ३१ ॥
आदायतन्तोयकुम्भं अस्त्रमन्त्रमुदीरयन्।
भ्रामयेत्पूर्ववद्धारा मथमध्ये निधापतम् ॥ ३२ ॥
सम्पूर्णमुदकेनैव कृत्वाफलसमन्वितम्।
गुरुपागमतःकुर्या च्छिष्यःप्रयतमानसः ॥ ३३ ॥
भगवद्यागवद्भक्त्या कर्मणामनसागिरा।
यागोपयुक्तसम्भारं तस्मैसर्वंनिवेद्यच ॥ ३४ ॥
सशिरःपाणियुग्मन्तु कृत्वावैचतदंघ्रिगम्।
क्षान्तव्यस्तुमयत्नेन श्रद्धापूतेन चेतसा ॥ ३५ ॥
पंचरात्रविदस्त्वद्व र्ताश्च स्नातकादिकान्।
सम्पूज्यविधिवद्द्या त्तेषांशक्त्याचदक्षिणाम् ॥ ३६ ॥
संवादनपरात्कालो लब्ध्वानुज्ञान्तु गौरवीम्।
भ्रातृभिस्सहचाश्नीयात्त बहुभिःपूर्वदीक्षितैः ॥ ३७ ॥

तथान्यैर्भगवद्भक्तैः स्सुहृत्सम्बन्धिबान्धवैः ।
व्रजन्तं सहशिष्यैस्तु कालेऽन्यस्तत्वया ॥ ३८ ॥
तदिच्छयाह्यनुव्रज्य निवर्तेताथवैयदा ।
कृत्वातु शादपतनं बहु शास्त्रप्रदक्षिणम् ॥ ३९ ॥
क्षामोक्षात्सर्वसिद्धीनां भक्तानां भावितात्मनाम् ।
परागविर्गुरुर्यस्मात् प्रसादस्स्मृतएवसः ॥ ४० ॥

इतिश्रीपांचरात्रे श्रीसात्वतसंहितायां गभिषेकविधि र्नाम
विंशः परिच्छेदः ॥२० ॥

## अथ एकविंशः परिच्छेदः ।

नारदः ।

भगवानथविश्वात्मा चोदितस्तालकेतुना ।
द्विजप्रधानायतस्मै आकर्णयतसांप्रतम् ॥ १ ॥

संकर्षणः ।

नियमाःकिं स्वरूपास्तु दातव्याद्दीक्षितस्यच ।
गुरुणाप्रतिपन्नस्य शासनेस्मिन् जगत्प्रभोः ॥ २ ॥

श्रीभगवान् ।

प्रत्येकस्मिन्हिनियमे निर्गतेतु गुरोर्मुखात् ।
प्रत्याद्वाडमितेर्वं शिष्यःशोदासिमान्तये ॥ ३ ॥
नारूप्यागौरवोच्चाया देवी यानगवान्यपि ।
गुरुसद्रूपगंध द्रष्टव्यो नियमैर्वदि ॥ ४ ॥

शयनासनयानाद्यं सदीयमभिवादयेत् ।
अवन्ध्यितस्सदाकुर्या द्व्यापारं तद्गृहेखिलम् ॥ ५ ॥
नासने तत्समक्षंच वक्तव्यं नचदक्षिणे ।
संयन्त्रित स्संयतवाक् तदाज्ञां सम्मतीक्षते ॥ ६ ॥
तत्सन्निधौतु नान्येषां मत्युत्थानं समाचरेत ।
कुर्यात्संशय विच्छित्तिं नतदादिष्टातोविना ॥ ७ ॥
व्याख्यानमागमानांच योगाभ्यासश्चधारणा ।
एवमादिकमन्यच्च स्वगृहे न गुरोर्गृहे ॥ ८ ॥
न शंखचक्रपद्मांके भोक्तव्यं भाजनेतुषे ।
तल्लक्ष्मचोपलंकाष्ठं लोष्ठंवाफलकादिकम् ॥ ९ ॥




क्रमणीयंनपादेन कल्पयन्नैवासनार्थतः ।
भगवच्छासनज्ञाना माराधनरतात्मनां ॥ १० ॥
यथोचितंयथाशक्ति पूजाकार्यासदैवहि ।
प्रासादंदेषदेशीय माचार्यं पाश्चरात्रिकम् ॥ ११ ॥
अश्वत्थश्च वटन्धेनुं सत्समूह गुरोर्गृहम् ।
दूरात्प्रदक्षिणीकुर्यात् त्रिकदात्प्रतिमांविभोः ॥ १२ ॥
दण्डवत्प्रणिपातैस्तु नमस्कुर्याच्चतुर्दिशम् ।
नयानपादुकारूढो नचोपानत्कपादभृत् ॥ १३ ॥
विनिक्षिप्तमनाभूत्वा सविशेद्भगवद्गृहम् ।
नव्याख्यावसरेकुर्या त्मत्युत्थानाभिवादने ॥ १४ ॥
नाभक्तानां नमूर्खानां नास्तिकानां विशेषतः ।
दातव्यस्संप्रवेशश्च नोपहासरतात्मनाम् ॥ १५ ॥
नापूजितं समुद्घाट्यं शासनं पारमेश्वरम् ।
समक्षं नान्यभक्तानां नतत्सन्देह शान्तये ॥ १६ ॥
प्रकाशनीयं तच्छोभा यच्चान्येन कुतोभयात् ।
सुगन्ध फलपुष्पाद्य मपूर्वं मुचितंचयत ॥ १७ ॥

अभोज्यं गुरुदेवाग्नि निवेदन विवर्जितम् ।
तस्करात्पतिताच्चण्डा द्दम्भलोभसमन्वितात ॥ १८ ॥
मात्राधि [ लुब्धादि ] सं न गृह्णीयात् अभक्तादुपचारतः ।
गृहीत्वाभगवद्विम्बं वृत्त्यर्थमटतीदयः ॥ १९ ॥
नगरापणवीथीषु तस्यदेवलकस्यच ।
दर्शनं स्पर्शनंचैव कुर्यात्संभाषणंनाहि ॥ २० ॥
गायेत्तुभगवद्गाथां योग्रामे नगरान्तरे ।
तम्प्रभुस्तावकंचैव पूजयेच्चैव [?] सर्वदा ॥ २१ ॥
विष्णुव्रतपरंचैव विष्ण्वायतनवासिनं ।
विष्ण्वालाप कथासक्तं विष्ण्वायतनमार्जकम् ॥ २२ ॥
श्रावकंवैष्णवानांच विष्णुधर्मपरायणम् ।
पर्येष्टिकृद्वैष्णवानां मान्योचे विष्णुवत्सदा ॥ २३ ॥
प्रातरुत्थाय चिन्वीयात् स्वारामात्स्वयमेवहि ।
पूजार्थं मत्रंमन्त्रेण पुष्पादीन् प्रयतस्सदा ॥ २४ ॥
याचा दरव्य मथवा निर्बाधं हि तदार्जने ।
अकण्टकद्रुमोत्थाश्च कण्टकद्रुमजा अपि ॥ २५ ॥
हृद्या स्सुगन्धाः कर्मण्या ग्राह्या स्वर्वेसितादयः ।
उग्रगन्धाह्यकर्मण्या स्वयमसिद्धा स्तथैव च ॥ २६ ॥
चतुष्पथशिवावास श्मशानावनिमध्यगाः ।
क्षता अशनिपाताद्यैः क्रिमिकीटसमावृताः ॥ २७ ॥
वर्जनीयाः प्रयत्नेन पत्रपुष्पफलादयः ।
अम्बुजानि सुगन्धीनि सितरक्तानि कानिचित् ॥ २८ ॥
योक्तव्यानि पवित्राणि नित्य माराधकेन तु [ नेतुवै ] ।
सांकुराणि च पत्राणि भूगतान्येव मेवहि ॥ २९ ॥
विहितान्यर्चने नित्यं यथर्तुप्रभवानि च ।
नगृह्द करवीरोत्थैः कुसुमै रर्चनं हितम् ॥ ३० ॥

विशेषत स्सकामस्य सिद्धिभूतिपुलस्य च ।
अतोन्यथा न दोषोस्ति दोष उन्मत्तकादिभिः ॥ ३१ ॥
सद्योहृतानां विहित स्त्व म्लानानां यदा क्रयः ।
प्रदान मम्बुसिक्तानां तेषां कार्यं नचान्यथा ॥ ३२ ॥
निर्दोषतां प्रयान्त्याशु मन्त्रिणा मवलोकनात् ।
भवन्ति भक्तिपूतानि ह्यन्मन्त्रनिरतात्मनाम् ॥ ३३ ॥
न कांस्यपात्रे भोक्तव्यं न तत्र विनिवेदयेत् ।
देवाय मधुपर्कार्थं तथा वै सति सम्भवे ॥ ३४ ॥
मृण्मयापस्पात्रेषु न धूप मपि निर्दहेत ।
धूपार्थं गुग्गुलु स्साज्यो देयश्च सुरभिः परः ॥ ३५ ॥
सह घण्टारवेणैव दीपार्थं परिवर्जयेत् ।
मेदोमज्जातसीतैलं घृतं तैलविमिश्रितम् ॥ ३६ ॥
नाविकं मधुपर्कार्थे दधिक्षीरादिकं शुभम् ।
कौलुत्थः कौद्रवः कार्ष्णशाल्युत्थो नोदनोदितः ॥ ३७ ॥
नापक्वान्नं न मांसञ्च नारनालविभावितम् ।
नचाराधनकालेतु समुत्तिष्ठे त्त्वरान्वितः ॥ ३८ ॥
श्वासमात्रिक्रियां चैव उपरोधेन केनचित् ।
आधारा द्भगवद्बिम्बा द्भद्रपीठा ज्जलच्युतिः ॥ ३९ ॥
न कार्या कण्टके लोहैः मृदुकूर्चादिना विना ।
नचापा ग्र स्वपे न्नग्नो न मौनं चाचरे द्गुरोः ॥ ४० ॥
नोच्छिष्टं संस्पृशेद् किंचि न्नाभीया द्भगवद्गृहे ।
सन्निकर्षे नचाग्नेस्तु न गृहे मद्यसंकरे ॥ ४१ ॥
भक्तानां कृतदीक्षाणां व्यंगंशा [शा] स्त्रार्थमे [ए] वच ।
नकुर्या त्तैजिगीपुस्तन् [ अन्येषां धर्मशास्त्रं च ]
लोभनिर्मुक्तयाधिया ॥ ४२ ॥
शिष्याणां विष्णुभक्तानां नित्यं कुर्याच्च संग्रहम् ।
मानमात्सर्यकार्पण्य लोभमोहादयो ऽगुणाः ॥ ४३ ॥

वर्जनीयाः प्रयत्नेन [ नेतव्या स्ता नवं सर्वे ]
यावज्जीवावधि क्रमात् ।
अकृत्स्ना दुपसन्नानां देशान्तरनिवासिनाम् ॥ ४४ ॥

इष्टोपदेशः कर्तव्यो नारायणरतात्मनाम् ।
यो नवेत्त्याच्युतं तत्वं पञ्चरात्रार्थ मेव च ॥ ४५ ॥
तथा सद्वैष्णवीं दीक्षां नानाशास्त्रोक्तलक्षणाम् ।
न तेन सह सम्बन्धः कार्यो भिन्नक्रमेण तु ॥ ४६ ॥

न शास्त्रार्थस्य शास्त्राणां बुद्धिपूर्व उपप्लवः ।
आचर्तव्य इहाज्ञानात पारम्पर्यक्रमं विना ॥ ४७ ॥
प्रष्टव्यो भगवद्भक्त आप्तो लक्षणकोविदः ।
प्रसिद्ध आर्जवे वृद्धो नष्टं शास्त्रार्थलक्षणम् ॥ ४८ ॥
मुद्रामण्डलमन्त्राणां निरसन्देहपरेण च ।
भवितव्यं गुरूणां च सकाशा त्सर्वदैव हि ॥ ४९ ॥

नच सर्वज्ञमन्त्राणां विना भावांशकेनतु ।
आनुकूल्यं गवेष्टव्य मुक्त्वा मण्डलदर्शनम् ॥ ५० ॥
नाभिचक्रेतु हृत्पद्मे कन्दमूले गलावटे ।
भ्रूमध्ये ब्रह्मरन्ध्रेच स्थाने ष्वेतेषु मन्त्रराट् ॥ ५१ ॥
स्मर्तव्य स्सूर्यसंकाशः प्रवासे शयने ध्वनि ।
मृगसूकरमांसानि नाद्यान्मीनोत्थितानि च ॥ ५२ ॥

न हंसकच्छपीयानि न शृंगाटफलानि च ।
न तथा पद्मबीजानि ॥ घटाग्रं समारुह्य ॥ ५३ ॥
छेद्यमानं न तत्पश्ये तद्दलं नांघ्रिणा स्पृशेत ।
पुण्यक्षेत्रं महातीर्थं सिद्धाश्रम मनुत्तमम् ॥ ५४ ॥
वैष्णवीं पर्षदं चापि व्यक्तिस्थानं तथाच्युतम् ।
आसाद्य मण्डलं कृत्वा चक्रं वा द्वादशारकम् ॥ ५५ ॥

निर्वाहणीयं विधिवत् चातुर्मास्यं महामते ।
गृहे संयमपूर्वं या क्रमं कृत्वा तु कुम्भगम् ॥ ५६ ॥
चतुर्विधेन रजसा प्रतिमाया यथाग्रतः ।
संयुक्तानपि पूर्वोक्तैः एतांश्च समयान् सदा ॥ ५७ ॥
निर्वाहकाणां भक्तानां प्रयच्छे स्सततं गुरुः ।
ज्ञात्वा निर्वाहकं भक्तं तस्यादौ देशिकेनतु ॥ ५८ ॥
समुद्दिश्यास्तु ते सर्वे निर्वेहत्यथ येषु वै ।
तेषु तेषु नियोक्तव्यो यथा न च्यवते पुनः ॥ ५९ ॥
यावन्ति समयग्रस्य सविघ्नास्तु विनायकाः ।
विमुखा छिद्रयो यान्ति ज्ञापहो हि भवन्ति च ॥ ६० ॥
ज्ञात्वैवं सावधानेन निर्वक्तव्यं हितान् प्रति ।
सार मादाय वै बुद्ध्या निर्मथ्य नियमोदधिम् ॥ ६१ ॥
कृपया गुरुणादेय महाठानांतु पंचकम् ।
भक्ति रग्नौ गुरौ मन्त्रे शास्त्रे सदधिकारिणि ॥ ६२ ॥
नियतं पंचकं चास्य यथावत्परिपालनात् ।
अनुष्ठानात्तु नान्येषां स्वातन्त्र्येण यथेच्छया ॥ ६३ ॥
भव्यानां मनसोभीष्टाः प्रवर्तन्तेहि सिद्धयः ।
ये ऽ निर्मलेन मनसा तपरोधात्तु कुर्वते ॥ ६४ ॥
पालनं समयानां च ते मज्जनपसितेष्वनि ।
सुप्रसन्नेन मनसा यथैतत्परिपाल्यते ॥ ६५ ॥
तथा प्रसाद मभ्येति स्व आत्मातु हितैषिणाम् ।
नूनं कालुष्यमुक्तानां स्थिवात्मा मिह सत्पथे ॥ ६६ ॥
समये साधकाचार्यपुत्रकाणां भवेत् शुभम् ॥ ६६॥ ॥

इति श्रीपांचरात्रे श्रीसात्वतसंहितायां

समयविधि र्नाम

एकविंशः परिच्छेदः ॥ २१ ॥

# अथ द्वाविंशः परिच्छेदः ।

संकर्षणः ।

लक्षणं ज्ञातु मिच्छामि चतुर्णां देव सांप्रतम् ।
विज्ञातव्यास्तु कै र्लिगैः भेद स्तेषां [redacted] किंकृतः ॥ १ ॥

श्रीभगवान् ।

यश्श्रीमान् श्रद्धधानस्तु मतिमान् सुदृढव्रतः ।
सत्यवाक् भगवद्भक्तो मिताशी संगवर्जितः ॥ २ ॥
गुर्वाराधननिष्ठस्तु स्थिरबुद्धिरतन्द्रितः ।
सद्वैष्णवकुळे जात स्तु संस्कारै स्सुसंस्कृतः ॥ ३ ॥
पुरामाता पितृभ्यान्तु नीतस्सद्योग्यतापदम् ।
विमुक्तसंकरोदान्तः परत्रभयशंकितः ॥ ४ ॥
साधुसंगमसाकांक्ष श्शास्त्रार्थां स्वादलम्पटः ।
तत्संचय व्यसनवा न्धार्मिकाणां पथि स्थितः ॥ ५ ॥
शुभकर्मरतो नित्य मदीनस्सात्ववान्क्षमी ।
धीरोदयापरश्चैव साधूना मुपकारकृत् ॥ ६ ॥
निर्मलाम्बरधारीच विमलांगस्सदैवहि ।
प्रियभाषी मसन्नास्यः परद्रव्ये प्यलोलुपः ॥ ७ ॥
परदार स्पृहामुक्त स्सद्विवेक पदाश्रितः ।
क्षत्रविट् शूद्रजातीयो मद्यमांसे प्यलम्पटः ॥ ८ ॥
शौचस्वाध्यायनिरत स्सन्तुष्ट स्सततोद्यतः ।
दरिद्रेऽप्यर्जनपर श्चरतात ननुस्सदा ॥ ९ ॥
मानमात्सर्यकार्पण्य परित्यागपरोमहान् ।
द्वेषेर्ष्यादोषमुक्तो दम्भाचार विवर्जितः ॥ १० ॥

निश्शेषाणा मकर्मण्य द्रव्याणां परिहारकृत्।
मातु र्जनकनिष्ठानां सद्बन्धूनांच वत्सलः ॥ ११ ॥
उक्तनिर्वाहकश्चाभी नित्यंनीचासनप्रियः।
सर्वेषामूर्ध्ववोनित्यं स्थितिकामपरायणः ॥ १२ ॥
यशोद्धारैकरतया सुधियालंकृतस्सदा।
गुरुप्रसादादन्यत्र स्वगृहेवागुरोर्गृहे ॥ १३ ॥
लब्धदर्शनमात्रो वै मन्त्रमूर्तेस्तुमण्डले।
गुरुदृग्वीक्षणेनैव प्रोक्षणेनैवसंस्कृतः ॥ १४ ॥
बुद्ध्यतेतावताचैव कृतार्थोस्मीति सांप्रतम्।
ततःप्रभृतिकालाच्च सुप्रसन्नाच्च देशिकात् ॥ १५ ॥
पाठपूर्वंहिशास्त्रार्थं मभ्यर्थयति योनिशम्।
श्रुत्वाविचारयत्यर्थां नैकान्तेविजनेस्थितः ॥ १६ ॥
नाभिमानपदंयाति सुसम्पूर्णोविचोदितः।
शिक्षयत्यपनान्येषां लुब्धस्स्वार्थस्य सिद्धये ॥ १७ ॥
नोद्बाह्यविशास्त्रार्थं मभ्यर्थयतियोनिशम्।
नविक्रियामवाप्नोति ह्याक्षिप्तोप्यथसंसदि ॥ १८ ॥
ममन्यतेतदासम्य ग्विजेष्यामीति वादिनः।
कुण्डमण्डलमुद्राश्च पीठबिम्बालयेषुच ॥ १९ ॥
समन्त्रेषुच बुद्धिस्थं नित्यंकुर्याच्च संग्रहम्।
अयनादिपुकालेषु प्रत्यहं त्वस्यसम्भवात् ॥ २० ॥
दैषमर्चापयेत्कुर्यात् स्वयंवामान्त्रमर्चनम्।
गुर्वादिष्टो गुरूणांच कुर्यात्पादाभिवन्दनम् ॥ २१ ॥
कार्यातेषांनजिज्ञासा यथायात्यप्रसन्नताम्।
प्रसाद्यविधिवत्पृच्छे दबुद्धमथविस्मृतम् ॥ २२ ॥
विज्ञातमपयाज्ञात माचार्यैःपरिचोदितः।
वत्सलांतेषां स्वकांमुद्रां गुप्तांकृत्वा प्रकाशयेत् ॥ २३ ॥

संस्कृतश्रुतपाठाभ्यां स्वगुरुंप्रार्थयेत्ततः ।
भगवद्यागपूर्वन्तु पुत्रकारूयंपरम्पदम् ॥ २४ ॥
असन्निधानात् स्वगुरोः प्रार्थयेत्तत्प्रतिश्रितम् ।
तदभावात्तुवैचान्यं क्रमातसद्वैष्णवोद्दियः ॥ २५ ॥
नान्यदर्शनसंस्थन्तु गुरोर्यस्मादवैष्णवात् ।
कर्मतन्त्रंसमन्त्रंच द्रव्यसंघातजम्फलम् ॥ २६ ॥
नूनंवैफल्यमायाति तस्मात्तंपरिवर्जयेत् ।
द्रव्यमन्त्रक्रियाभाव भेदात्फलमनश्वरम् ॥ २४ ॥
जायतेकर्मिणांशश्व दभेदाद्वैश्यकर्मिणाम् ।
सर्वत्रसमबुद्धीना मात्मन्यभिरतात्मनाम् ॥ २५ ॥
लोकाचारविमुक्तानां पक्षविग्राहिणान्तुये ।
ज्ञात्वैवंसहवैयस्य सम्बन्ध स्सफलोभवेत् ॥ २६ ॥
संबंद्धासउपास्तव्य इहामुष्मिकसिद्धये ।
लिंगैरेतैःपरिज्ञेय स्सद्गोत्थैरकृत्रिमैः ॥ २७ ॥
आचार्यैस्समयीनाम शिष्योजात्याचतुर्विधः ।
एवंपुत्रकपूर्वाये परिज्ञेयास्तुतेत्रयः ॥ २८ ॥
किन्तुतस्यविशेषोय स्तमिदानींनिबोधतु ।
विज्ञातागुरुणायस्य विनियोगात्कृतार्थता ॥ २९ ॥
स्वल्पमद्द्योतमार्येन शिक्षितेनागमेनच ।
तस्यानुग्रहबुध्यातु आभू [ हू ] तस्याच्युतालये ॥ ३० ॥
कृपानिरीक्षणाद्यश्च देवाग्नि वदेत्स्वयम् ।
तुष्टोमन्त्रमयंसम्यक् साध्र्यंपुष्पाक्षतांजलिः ॥ ३१ ॥
ततःप्रभृतिकालाच्च ध्यानंन्यासादिकंविना ।
पूजनंमन्त्रमात्रेण वह्नितर्पणवर्जितम् ॥ ३२ ॥
योग्यतापदसिद्धयर्थं दत्तम्बिम्बेष्वुवास्थले ।
सामान्यविधिनाचोक्तो गुरुणाचार्यपाच्युतम् ॥ ३३ ॥

सतयेतितदुक्तश्च भक्तस्वेमुदितस्सदा ।
आलोचयंस्तु शास्त्रार्थं स्वमुद्रामुद्रितन्तुपे ॥ ६४ ॥
शश्वयानिरीक्षमाणश्च योगक्षेमादिकंगुरोः ।
तदाराधननिष्ठस्तु तच्चित्तस्तत्परायणः ॥ ३५ ॥
समाक्षिप्तस्तदादेशा न्मन्त्रमुद्राद्वयंविना ।
कीर्तयेर्यस्वगुरोर्भूपात् ज्ञातंशास्त्रार्थ मुत्तमम् ॥ ३६ ॥
विचारयंस्त्वधियासम्य ग्वैष्णवानां हि संसदि ।
यथालैविजनानांच मध्ये मात्सर्यभूमिताम् ॥ ३७ ॥
सशिष्यःपुत्रकोनाम स्वपुत्रादधिकस्सदा ।
साधकाख्येविशेषोय स्त मिदानींनिबोधमे ॥ ३८ ॥
पूर्ववं लब्धदीक्षस्तु मन्त्राराधनतत्परः ।
स्नानादिना विलेनैव देवभूतेन कर्मणा ॥ ३९ ॥
सिद्ध्ये स्यात्मन श्चैव लोकानां सा [ रा ] धनाय च ।
वने वा पतनोद्देशे स्वगृहे वा मनोरमे ॥ ४० ॥
मन्त्रसेवाप्रदानं च कुर्या न्मन्त्रव्रतं महत् ।
परमः पालनीय श्च तेनैव समय स्सदा ॥ ४१ ॥
यद्दतीवच संलब्धं यच्छतयानन्द मात्मनि ।
तदाश्चर्यं न वक्तव्यं पूजापूर्वं गुरो विना ॥ ४२ ॥
आत्मीयमुद्रासंयुक्तो नित्ययुक्त स्स्वकर्मणि ।
श्रद्धया च स्सबोद्धव्य स्साधको भगवन्मयः ॥ ४३ ॥
लिंगैः पूर्वोदितै र्युक्त स्तथभियुक्तो विशेषतः ।
अनुग्रहार्थं गुरुणा भक्तानां विनियोजितः ॥ ४४ ॥
पदानि पदमन्त्राणां सार्थकानि च वेत्ति यः ।
वाच्यवाचकभावेन सांगनांगवशेन वा ॥ ४५ ॥
करावग्रहकल्हार चक्रन्यासार्थं मेव च ।
समेन विषमेणैव शक्र चित्रादिकेन च ॥ ४६ ॥

सङ्कर्षणः ।

ज्ञातोविभवदेवानां देवबीजगणोमया ।
अधुनाज्ञातु मिच्छामि तत्पिण्डनिचयोद्दिवः ॥ २ ॥

श्रीभगवान् ।

यथाक्रमोदितानांच देवानांविनिबोधतु ।
पिण्डमन्त्रगणंमत्त स्सावधानेनचेतसा ॥ ३ ॥
नाभेरष्टमबीजंयत् स्थितन्तत्सप्तमोपरि ।
तदधश्चोत्तरंचाक्षा दन्तेनविभूषयेत् ॥ ४ ॥
अथोत्तरंचाक्षदेशा दादायतदधोन्यसेत् ।
बीजंनेमेर्द्वितीयंयत् पञ्चांमञ्चेतदासने ॥ ५ ॥
आधारषष्ठंसंरूढं कुर्याद्वैनाभिसप्तमम् ।
अरात्षष्ठस्यचोर्ध्वंतु नाभिपूर्वन्तुविन्यसेत् ॥ ६ ॥
सप्तमंचाष्टमंचापि ह्युपर्युपरिवैक्रमात् ।
अथाष्टमंनाभिदेशा दारूढंसप्तमोपरि ॥ ७ ॥
तदधोमध्यमंचाक्षनवमंपरिकीर्तितम् ।
भूयोरारपंचम [ व ] स्योर्ध्वे दद्यान्नाभितृतीयकम् ॥ ८ ॥
बाह्यात्तृतीयन्तन्मूर्ध्नि पिण्डोयंदशमस्स्मृतः ।
द्वितीयंनाभिदेशाच्च तात्तृतीयंतदूर्ध्वगम् ॥ ९ ॥
नेमेराद्यन्तमूर्ध्वंतु स्मृतमेकादशास्विदम् ।
अथोनाभिचतुर्थस्य सप्तमंविनिवेश्यच ॥ १० ॥
तदधोनेमिपूर्वन्तु पदद्वादशमंस्मृतम् ।
नेमेस्त्रिदशमादाय तदधोयोजयेत्क्रमात् ॥ ११ ॥
सप्तमं च चतुर्थं च पुन नांभे महामते ।
अरा च्चष्ठासना स्सर्वे पिण्डमेत्त्रयोदशम् ॥ १२ ॥

नाभे श्चतुर्थ मादाय तदूर्ध्वे सप्तमं न्यसेत ।
नवमं चापि तन्मूर्ध्नि एत द्विद्धि चतुर्दशम् ॥ १३ ॥
नेमे श्चतुर्थसंख्यस्य ऊर्ध्वाधोभ्यां निवेश्य च ।
वर्ण नाभिद्वितीयं तत् तत्पंचदशमं स्मृतम् ॥ १४ ॥
यद्विंशसंख्यकं बाह्या दाद्यात्ताराख्यमण्डलात् ।
शान्तिमेन च षष्ठेन वृत्तमायादनन्तरम् ॥ १५ ॥
नेमेस्सप्तमवर्णस्य ऊर्ध्वाधोभ्यां निवेश्यच ।
नाभिदेशा द्वितीयं य द्विद्धि सप्तदशन्तु तत ॥ १६ ॥
नवमं नाभिदेशाच्च सप्तमस्योपरि न्यसेत् ।
यथाष्टमं नाभिदेशा त्कुर्यां त्सप्तमंमूर्ध्वगम् ॥ १७ ॥
द्वितीयमपि तस्याथ तस्मा द्वे नाभिमण्डलात ।
अस्य त्रयोदृशा दूर्ध्वे न्यूनविंशतिमन्तु तत् ॥ १८ ॥
नाभे श्चतुर्थं तस्योर्ध्वे तत्तृतीयं तदूर्ध्वगम् ।
तत्रैव सप्तमं य द्वे विद्धि विंशतिमं त्विदम् ॥ १९ ॥
द्वितीयस्याष्टम न्नाभे र्वर्णस्योर्ध्वे नियोज्य च ।
अरा त्षष्ठं च तस्याधः कुर्या त्तदनु लांगलिन् ॥ २० ॥
नवमं नाभिदेशाच्च तृतीयस्योपरि न्यसेत् ।
द्वितीयं तदधः कुर्या त्त्रयोविंशतिमं स्मृतम् ॥ २१ ॥
अष्टमं सप्तमं नाभे द्वितीयं प्रथमं ततः ।
क्रमेण योजये त्तैव अरा त्षष्ठस्य मूर्धनि ॥ २२ ॥
नेमे स्सप्तम मादाय तदधो नाभिसप्तमम् ।
तात्तृतीयं च तस्याधः चतुर्विंशतिमं स्मृतम् ॥ २३ ॥
नाभे स्तृतीयं तस्योर्ध्वे द्वितीयं तस्यचोपरि ।
निवेश्य नेमिपूर्वन्तु षड्विंशं मधुनोच्यते ॥ २४ ॥

तेषा मर्थवशा चैव विनियोगं हि वस्तुषु ।
ध्यानदैवतविज्ञाना द्व्यापकत्वन्तु चाञ्चलि ॥ ४७ ॥
निर्लिंगं देवतानां च शब्दब्रह्मत्व मेवहि ।
यथावदनुजानाति स्ववर्णैः प्रागुदीरितम् ॥ ४८ ॥
सांकर्य मागमानां च वेत्ति वाक्यवशात्तु यः ।
तत्र वै त्रिविधं वाक्यं दिव्यं च मुनिभाषितम् ॥ ४९ ॥
पौरुषं चारविन्दाक्ष तद्भेद मवधारय ।
यदर्थोद्य मसन्दिग्धं स्वच्छ मल्पाक्षरं स्मृतम् ॥ ५० ॥
तत्पारमेश्वरं वाक्य माज्ञासिद्धंहि मोक्षदम् ।
प्रशंसकं हि सिद्धीनां सम्प्रवर्तक मप्यथ ॥ ५१ ॥
सर्वेषां रंजकं गूढं निश्चयीकरणक्षमम् ।
मुनिवाक्यन्तु तद्विद्धि चतुर्वर्गफलप्रदम् ॥ ५२ ॥
अनर्थक मसम्बद्ध मल्पार्थं शब्दडम्बरम् ।
अनिर्वाहक मायोक्ते वाक्यं तत्पौरुषं स्मृतम् ॥ ५३ ॥
द्वेयं चानर्थसिद्धीना माकरं नरकावहम् ।
प्रसिद्धार्थानुवादं यत संगतार्थं विलक्षणम् ॥ ५४ ॥
अपिचे त्पौरुषं वाक्यं ग्राह्यं तन्मुनिवाक्यवत् ।
एष मादेय वाक्योत्थ आगमो यो महामते ॥ ५५ ॥
सन्मार्गदर्शनं कृत्स्नं विधिवादं च विद्धि तम् ।
तत्प्रामाण्यात्तु यत्किंचित् समभ्यूह्य यथार्थतः ॥ ५६ ॥
पूर्वापराविरोधेन निर्वाहयति सर्वदा ।
भक्तानां चोदित स्येवं पदवाक्यप्रमाणवित् ॥ ५७ ॥
स्वमुद्रालंकृतश्चापि य स्सदा चक्रभृच्चरेत् ।
स देशिको नियोक्तव्य स्सर्वं स्सर्वाधिको गुणैः ॥ ५८ ॥
वेदयत्यन्यथात्मानं योन्यस्मिन् योजितं पदे ।
फलापेक्षान्तु हृदये स याति नरकेऽधमः ॥ ५९ ॥

नो भाजनं स्यात सिद्धीनां क्रमत्यागे कृते सति ।
स्व माचारं स्वकां जातिं स्वगोत्रं स्वगुरो र्गृहम् ॥ ६० ॥
स्वपदं च स्वसंस्कारं प्राङ् निषिद्धेन वै विना ।
गोरय त्यचिरा द्यो वै पातित्य मुपयाति सः ॥ ६१ ॥
तस्मा च्छ्रेयोर्थिना नित्यं नाभिमानं न तत्क्षपात् ।
अधरोत्तरता सम्य गाचरण्या च कुत्रचित् ॥ ६२ ॥

संकर्षणः ।

मुद्राचतुष्टयं देव कीदृग्लक्षणलक्षितम् ।
ज्ञायते यत्परिज्ञाना द्देशिकान्तं चतुष्टयम् ॥ ६३ ॥

भगवान् ।

यापूर्वंप्रहृदेः प्रोक्तं शिरोमुद्रादिपंचकम् ।
तदंगुष्ठविनिर्मुक्तं विद्धि न्यूनांगुलैः क्रमात् ॥ ६४ ॥
चतुष्टयं चतुर्णान्तु गुर्वन्तानां यथास्थितम् ॥ ६४॥ ॥

इति श्रीपांचरात्रे श्रीसात्वतसंहितायाम्
अधिकारिमुद्राभेदविधि नाम

## द्वाविंशः परिच्छेदः ॥ २२ ॥



## अथ त्रयोविंशः परिच्छेदः ।



नारदः ।

कामपालेनदेवेश स्ववर्ण्याद्गणसत्तमाः ।
प्रोदितोयत्तदधुना वक्ष्यामिसमासतः ॥ १ ॥

अरा त्पञ्चासनं कुर्या द्वर्णनाभितृतीयकम् ।
तदूर्ध्वे सप्तमं चैव अतोन्य मवधारय ॥ २५ ॥
न्यूनं षड्विंशति नेमे स्तस्योर्ध्वाधोगतं न्यसेत् ।
सप्तमं नाभिवर्णेभ्य स्स्वरवर्गाच्च पंचमम् ॥ २६ ॥
नेमे रायाद्वितीयं च आदाय तदधो न्यसेत् ।
मध्यमक्षा न्महाबुद्धे रष्टाविंशतिमं स्मृतम् ॥ २७ ॥
नवमं सप्तमं नाभे स्तृतीयं च तृतीयकम् ।
अथोत्तरस्य मक्षाच्च आदाय तदधो न्यसेत् ॥ २८ ॥
तृतीयं च द्वितीयं च नाभिदेशा दनन्तरम् ।
नाभिद्वितीय मादाय सप्तमं तुर्यमेव च ॥ २९ ॥
तृतीयस्याथ वै नाभे श्चांशा द्वाद्यं तु मूर्धगम् ।
अष्टमस्याथ वै नाभे रथ ऊर्ध्वे द्वितीयकम् ॥ ३० ॥
दद्या त्तदन्तरा त्षष्ठं तस्यैवाधोगतं तु वै ।
अरा त्षष्ठस्य चोर्ध्वेतु नाभिपूर्वं च तत्परम् ॥ ३१ ॥
विनिवेश्याष्टमं चापि षट्त्रिंश मवधारय ।
सप्तमं च तृतीयं च चतुर्थं नाभिमण्डलात् ॥ ३२ ॥
योजयित्वा तदूर्ध्वे चाप्यराणां त्रिदशं न्यसेत् ।
अथवा नवमं नाभे स्तृतीयं च द्वितीयकम् ॥ ३३ ॥
सप्तत्रिंशकं विद्धि नाभिदेशा दथाहरेत् ।
अरा त्पञ्चासनं पूर्वं द्वितीयं च तदूर्ध्वतः ॥ ३४ ॥
नवमं चापि तस्योर्ध्वे पिण्डास्त्वद्यादिमं विना ।
अरान्तायेन वै मूर्धा सर्वे कार्या ह्यलंकृताः ॥ ३५ ॥
नमोन्ताः प्रणवाद्याश्च युक्ता स्संज्ञापदै स्स्वकैः ।
अरान्ताद्यं विना यस्य य ऊर्ध्वे वर्धते स्वरः ॥ ३६ ॥
अधोवानाभिपूर्वेण सहसा केवलं द्विवम् ।
अपास्य च ततः कुर्या त्सर्वेषां पूजनाय च ॥ ३७ ॥

स्वेन स्वेनतु पिण्डेन विद्यावच्चांगकल्पनम्।
नमः प्रणवसंज्ञास्याः जाति कर्मवशा त्पुनः॥ ३८ ॥
ज्ञातदुक्तात्तु यजनात मोक्षनिष्ठ स्समाचरेत्।
बीजपिण्डपदोत्थानां विनियोगन्तु चाखिलम्॥ ३९ ॥
किन्त्वेषां येभवी मुद्रा देयाराधनकर्मणि।
तदंगमुद्रा ह्यांगानां योज्या मन्त्रे स्स्वके स्सह॥ ४० ॥
... ... ... ... येहामन्त्रोदितं मया।
दीक्षापूर्वं हि मन्त्राणां चातुर्वर्ग्यं तथासनम्॥ ४१ ॥
लक्षणं पदमन्त्राणा मथेदानीं निबोधतु।
यै विना लब्धसत्ताना मर्चनं हि न जायते॥ ४२ ॥
विश्वातीताय विमलपदं विद्याविधायिने।
पद्मनाभाय वै विश्वव्यापिने तदनन्तरम्॥ ४३ ॥
चतुर्विंशाक्षरं विद्धि एतत्संख्यं परं शृणु।
ज्योतीरूपाय पंचार्णं पदं गगनमूर्तये॥ ४४ ॥
ध्रुवाय दद्या त्तदनु परमन्त्रमक्षरं ततः।
पद्मासिचतुर्वर्णं हेतवे त्र्यक्षरं त्विति॥ ४५ ॥
अनन्ताय पदं दद्या ततो परिमिताय च।
सर्वाश्रयाय तदनु तदन्ते ध्रुवशक्तये॥ ४६ ॥
एतद्विंशतिसंख्यं च द्वाविंशं क्रमव श्शृणु।
नमो भगवते कृत्वा वासुदेवाय वै ततः॥ ४७ ॥
सर्वशक्त्यात्मने नन्तमूर्तयेतु पदं त्विति।
विद्यया [ त्मा ] त्मने महाशब्दं पुरुषाय पदं ततः॥ ४८ ॥
मोहमायापदं चैव ततो विध्वंसिने तु वै।
सदोदिताय शब्दं तु सर्वशक्ति पदं ततः॥ ४९ ॥
नियोक्तव्यं चतुर्वर्णं सप्तविंशाक्षरं स्मृतम्।
पदं वेदविदे विश्वव्यप्रकाय ततो भवेत्॥ ५० ॥

तदन्ते विश्वपतये ततो वै परमात्मने ।
एष विंशतिभि र्वर्णैः शृणु सप्तदशाक्षरम् ॥ ५१ ॥
ज्ञानात्मने पदं कुर्यात् संविच्छब्द मतः परम् ।
पदं प्रकाशाशयाय शान्तरूपाय वै ततः ॥ ५२ ॥
अनन्तशक्तयेसर्व व्यापिनेतदनन्तरम् ।
जगन्मयायतदनु विश्वरूपायवैपदम् ॥ ५३ ॥
एकविंशतिभिर्वर्णै रयमुक्तोपरंशृणु ।
सत्सत्वपदमादाय गुहाशयपदंततः ॥ ५४ ॥
ततःपरमहंसाय ततोमानसचारिणे ।
न्यूनविंशत्यक्षरश्चैवा यातोयज्ञमूर्तये ॥ ५५ ॥
पदमादायतदनु विश्वान्तर्वर्तिनेतुवै ।
ततोभुवनशब्दन्तु वराहायपदंत्वथ ॥ ५६ ॥
विभूतिस्वामिनेचेति चतुर्विंशाक्षरस्त्वयम् ।
नमोभगवतेदद्या त्तोवै [ वासवादये ] वामबाधिये ॥ ५७ ॥
जडज्वलेन्धनपदं प्रदीप्तपदमेवतु ।
वीर्यायफट्तदन्तेतु एतत्संख्यस्त्वयंस्मृतः ॥ ५८ ॥
सर्वान्तश्चारिणेदद्यात् प्रसन्नपदमेवच ।
मूर्तयेथतदन्तेवै दद्याद्धर्मात्मनेपदम् ॥ ५९ ॥
षोडशाक्षरमेतद्वै अतोगुह्यतमंशृणु ।
सर्वविद्येश्वरायाय दद्याद्वाक्पतयेततः ॥ ६० ॥
पदम्पदपदादाय ? [ विदेद्द्यात् ] ततोवाग्विभवेतिति ।
न्यूनविंशाक्षरोह्येष स्तवपरंकथयामिते ॥ ६१ ॥
योगैश्वर्यप्रदायाय योगनिद्रारतेतिच ।
निरतायपदंदद्या द्भगवान्जलशायिने ॥ ६२ ॥
त्रिरष्टवर्णसंख्यश्च अपमेकाधिकस्तुवै ।
भगयापदमादाय अनन्तपदशक्तये ॥ ६३ ॥

तेजोमयायभुवन भूतेयद्वचक्षरंपदम् ।
तदन्तेविनियोक्तव्यं पदंवैकच्छपात्मने ॥ ६४ ॥
षड्विंशार्णमिमंविद्धि मन्त्रंमन्त्रविदांवर ।
यज्ञांगदेहायाद्याय महापदमतःपरम् ॥ ६५ ॥
वराहायततोदद्यात् पुराणपुरुषायवै ।
दद्यात्ततःप्रजाशब्दं तदन्तेपतयेपदम् ॥ ६६ ॥
चतुर्विंशाक्षरंमन्त्र मेतन्मन्त्रविदांवर ।
नमोभगवतेकृत्वा नारसिंहायवैततः ॥ ६७ ॥
तेजोनिधेपदंदद्यात् पदंहनहनेतिच ।
ततोविकर्मजायंवै शब्दंपश्चाक्षरंभवेत ॥ ६८ ॥
दुष्कृतंदहितदन्तेवै सप्तविंशाक्षरस्त्वयम् ।
आदायामृतमूर्तेवै ततोज्ञानचकात्मने ॥ ६९ ॥
सर्वेश्वरायभगव न्यूनार्विंशाक्षरस्त्वयम् ।
आदायपुण्डरीकाक्ष पदंवैपरमेश्वर ॥ ७० ॥
ततस्सकलशब्दन्तु सुखसौभाग्यवैपदम् ।
निधयेवांछितपदं ततस्सिद्धिप्रदेतिवै ॥ ७१ ॥
पदश्चाखिलदुःखेति ततस्तुशमनायवे ।
आनन्दसुन्दरपदं ततोलक्ष्मीपदंन्यसेत् ॥ ७२ ॥
पतयेशब्दमुच्चार्य पंचाशार्णस्त्रिरुज्झितः ।
सदसत्पदमादाय मूर्तयेतदनन्तरम् ॥ ७३ ॥
विश्वोत्तमायतदनु ततोमृतनिधेतुवै ।
षोडशार्णस्त्वयंमन्त्र उक्तःकान्तात्मनोविभोः ॥ ७४ ॥
पुरुषोत्तमायशब्दं ततस्सिद्धिप्रदेतिवै [ततोमतिहृतेतिच]।
शान्तयेचपदंदद्यात् सर्वेश्वरपदंततः ॥ ७५ ॥
समग्रोग्रभयेत्यत्र निवारणपदन्ततः ।
सप्तविंशाक्षरोमन्त्र उक्तश्चातःपरंशृणु ॥ ७६ ॥

नियन्त्रेपदमुद्धृत्य तदन्तेविश्वहेतवे ।
परब्रह्मसमेतश्च सेतवे श्रोमनन्तरम् ॥ ७७ ॥
मन्त्रोद्दिरष्टवर्णश्च कथितोवच्म्यतःपरम् ।
पदमप्रतिमेत्यादौ प्रभावन्तदनन्तरम् ॥ ७८ ॥
महाविभूतेतदनु महामायापदन्ततः ।
भयदर्शकशब्दन्तु तदन्तेसालकेतवे ॥ ७९ ॥
चतुर्विंशाक्षरोमन्त्र सयमुक्तस्समासतः ।
शान्तात्मनेपदंदद्या तदन्तेयमविन्यसेत् ॥ ८० ॥
नियमाश्रयायदद्या त्परमधिमहायच ।
नारायणायशब्दंते पूर्वसंख्यासमंस्मृतम् ॥ ८१ ॥
भवभंगपदंचैव कारिणेतदनन्तरम् ।
ततोभगवतेशब्दं दत्तात्रेयायवैततः ॥ ८२ ॥
वर्णाश्रमपदंचाथ धर्मशब्दमतःपरम् ।
परिग्रहायप्रणव मष्टाविंशाक्षरस्स्मृतः ॥ ८३ ॥
सर्वलोकमयायेति सर्वज्ञायपदन्ततः ।
सर्वेश्वरायन्यग्रोध शयनायपदंत्वथ ॥ ८४ ॥
त्रयोविंशात्यक्षरश्च स्वयमन्यन्निबोधतु ।
भूतशब्दमथादाय भावनायतदन्ततः ॥ ८५ ॥
शब्दंविश्वात्मनेचाथ विमलेतिपदन्ततः ।
दद्याद्विदितशब्दंवै तदन्तेविभवायच ॥ ८६ ॥
षड्विंशार्णस्वयंमन्त्रः परमस्मान्निबोधतु ।
भूतशब्दमथादाय व्यापिनेतदनन्तरम् ॥ ८७ ॥
पदंसहस्रार्चिषेतु दद्यात्पंचाक्षरंशुभम् ।
त्रिविक्रमायायपदं वयोपरिमितेतिच ॥ ८८ ॥
प्रभायायपदंदद्या त्त्रयोविंशाक्षरःस्मृतः ।
भरतायायशब्दन्तु पुरुषमथरायथे ॥ ८९ ॥

आत्मध्यानपरायेति णायवेद्व्यक्षरन्ततः ।
एकविंशाक्षरोमन्त्र स्ततोन्यमवधारय ॥ ९० ॥
नारायणायशब्दन्तु दद्यान्निरतिवैपदम् ।
शयानन्दमयायेति पदन्निरभिमानवे ॥ ९१ ॥
पदासक्तायवदन्तु पञ्चविंशाक्षरस्त्वयम् ।
परायपदमादाय ततोधिपरमात्मने ॥ ९२ ॥
योगेश्वरायहरये मन्त्रोयंषोडशाक्षरः ।
सप्तार्णपदमादाय प्राङ्नमःपरमात्मने ॥ ९३ ॥
कृष्णायशब्दंवदन्तु कमलंत्र्यक्षरन्ततः ।
दळशब्दन्तुवितत नेत्रायवदनन्तरम् ॥ ९४ ॥
अधिष्ठायब्रह्मणेवै अष्टाविंशाक्षरस्ततः ।
भगवन्पदमादाय युगान्तदहनेतिच ॥ ९५ ॥
दीप्तयेयपदंदद्यात् संसारपदमेवहि ।
बन्धविच्छेदकर्त्रेवै द्वाविंशार्णस्त्वयंस्मृतः ॥ ९६ ॥
पदंचतुर्मूर्तयेवै चतुर्गतिमयायच ।
शरशार्ङ्गभृतेदद्या च्छरदिन्दीवरत्विषे ॥ ९७ ॥
ततोभगवतेदद्या दभिरामपदन्ततः ।
शरीरायपदंचैव त्वष्टत्रिंशाक्षरस्स्मृतः ॥ ९८ ॥
दद्याद्विदितशब्दंवै परमार्थपदन्ततः ।
ततोवेदविदेशब्दं विदुषेव्यापकायच ॥ ९९ ॥
स्वामिंस्तदनुवैदद्या द्व्यक्षरंचापरम्पदम् ।
अयंविंशतिभिर्वर्णै रुक्तस्त्वन्यमतःशृणु ॥ १०० ॥
दद्याद्गरुडशब्दन्तु वदन्तेवाहनेतिच ।
सर्वशास्त्रोयतोयेवमतश्शु [ शमयाशु ] भमयेतिच ॥ १ ॥
ततोधुनधुनादाय कर्मबन्धांस्ततोवदेत् ।
धर्मपाहित्ततोदद्या ज्जह्यधर्मंवदोवदेत् ॥ २ ॥

चतुर्विंशाक्षरोमन्त्र एषवक्ष्याम्यतःपरम् ।
संहारमूर्तयेशब्दं काळवैश्वानरार्चिषे ॥ ३ ॥
पाताळशयनायेति त्वज्ञाननिगळेतिवै ।
निचयंहनवीप्सातः प्रणवन्तदनन्तरम् ॥ ४ ॥
पञ्चत्रिंशाक्षरोह्येष सर्वसिद्धिकरस्स्मृतः ।
प्रणवालंकृतास्सर्वे नमस्काराविभूषिताः ॥ ५ ॥
संस्मृताःपूजिताश्चैव ध्यावाजप्ताविशेषतः ।
तत्रास्तियत्प्रयच्छन्ति भक्त्याऽत्रकर्मणांभुवि ॥ ६ ॥
अथलांछनमन्त्राणां शास्त्राणांलक्षणंशृणु ।
सहस्रदीधितिपदं दद्याच्छुरितिवैततः ॥ ७ ॥
विग्रहायदशार्णंच व्यधिकंमकुटस्यच ।
आदायवांछितपदं ततस्सिद्धिप्रदायवै ॥ ८ ॥
महाचिन्तापदंदद्या न्मणयेतदनन्तरम् ।
त्रिद्विपंचदशार्णंच दशार्णमपरंशृणु ॥ ९ ॥
[ सर्वलक्षणशब्दन्तु ततस्सम्पत्प्रदायवै ।
ततश्चिन्तापदंदद्या न्मणयेतदनन्तरम् ] ॥ ११० ॥
सौभाग्यशब्दमादाय जननिष्पक्षरन्ततः ।
सर्वप्रदेतुतदनु अयंमेयंदशाक्षरः ॥ १ ॥
प्राणात्मनेधनत्याय विद्धिसप्ताक्षरंत्विह ।
काळकर्त्रेयचक्राय फडष्टार्णं प्रकीर्तितः ॥ २ ॥
विश्वात्मनेपदंदद्या त्तोविश्वप्रदायच ।
नवाक्षरमिदंविद्धि परमष्टाक्षरंशृणु ॥ ३ ॥
समादायपदंविधे ततोविघ्नेश्वरार्चिते ।
प्रासशब्दमूर्तयेतुर्या च्छंरायाष्टाक्षरःस्मृतः ॥ ४ ॥
पद्रसानिधेतुर्यांत् भीष्मशब्दमतःपरम् ।
भीषणायतदन्तेथे दशाक्षरमिदंस्मृतम् ॥ ५ ॥

प्राग्भुवनाधिपतये स्तम्भभूतायवैपदम् ।
त्रयोदशाक्षरंविद्धि ततोन्यमवधारय ॥ ६ ॥
पदमिन्द्रियकोशाय इत्यस्यायदशाक्षरम् ।
कल्पान्तानिळघोषाय विद्युल्लासितवैपदम् ॥ ७ ॥
प्रभायषोडशार्णन्तु नवाक्षरमतश्शृणु ।
महामायापदं दद्या द्वन्धवर्ण द्वयं ततः ॥ ८ ॥
ध्वंसिने पद मादाय एतत्संख्यम्पदंशृणु ।
सर्वास्त्रग्रसनादाय पराय तदनन्तरम् ॥ ९ ॥
सन्तापकायशब्दन्तु दर्पविध्वंसिनेततः ।
एकादशाक्षरं विद्धि नवाक्षरमथोच्यते ॥ १२० ॥
अज्ञान खण्डनपदं परायतदनन्तरम् ।
त्रैलोक्यमोहनपदं मूर्तयेत्तु नवाक्षरम् ॥ १ ॥
आकर्षणपरपदं महामाया मयेतिवै ।
द्वादशाक्षर संख्यस्तु नवाक्षर मथोद्धरेत् ॥ २ ॥
प्रागखण्डित शब्दन्तु तदन्ते विनियोज्यच ।
पराक्रमायशब्दन्तु समाक्षरमतश्शृणु ॥ ३ ॥
दर्पप्रशमकर्त्रेतु पञ्चार्ण विनिबोधवै ।
तेजोमालिनिचेत्येत द्वाविंशत्यनुकीर्तिताः ॥ ४ ॥
प्रागवदाद्यन्तसंरुद्धाः स्वनामपदभूषिताः ।
स्वसंख्यानिष्ठाक्षरस्यान्ते दद्यात्संज्ञा पदं सदा ॥ ५ ॥
चक्रवच्चात्र मन्त्राणां कुर्यान्नामा वधानकम् ।
क्रमाच्चतुर्दशानान्तु शक्त्यन्तानाञ्चफट्पदम् ॥ १२६ ॥

इति श्रीपांचरात्रे श्रीसात्वत संहितायां
विभवदेवता मन्त्रोद्धारविधि नाम

## त्रयोविंशः परिच्छेदः ॥ २३ ॥

# अथ चतुर्विंशः परिच्छेदः ।

श्रीनारदः ।

चित्रप्रधाना श्रुत्वैवं मन्त्राणां लक्षणं स्फुटम् ।
चोदितो भगवानेवं पुनर्वै तालकेतुना ॥ १ ॥

संकर्षणः ।

ब्राह्मणः क्षत्रियो वैश्य शूद्रोवा भगवन्मयः ।
नित्याराधनका मस्तु यदि मन्त्रमयं वपुः ॥ २ ॥
कर्तुं मिच्छति लक्षार्थं तत्र किं लक्षणो विधिः ।

श्रीभगवान् ।

चित्रमृत्काष्ठशैलोत्थं लल्लोहमय मेव वा ॥ ३ ॥
भेदभिन्नं द्विजातीनां हितं बिम्बं फलार्थिनाम् ।
तदभिन्न मकामानां प्राप्त चाप्यविरोधकृत् ॥ ४ ॥
अत्र चित्रमयं विद्धि भित्तिकाष्ठाम्बराश्रितम् ।
पूर्वं वर्णक्रमेणैव चतुर्धाचाम्बरोदितम् ॥ ५ ॥
तत्र कार्पासकौशेय क्षौमशाणमयन्तु वै ।
मृज्जमेवं सितायायं वार्क्ष विविध मेव च ॥ ६ ॥
श्राश्वत्थं ब्रह्मवृक्षोत्थं श्रीपर्णी सुरदारुजम् ।
शा[ खा ]लताल मयं चैव शाशव[शिंशुपं]न्ती स्तुवारजम् ॥ ७ ॥
एवं द्वयं द्वयं विद्धि द्विजादीनां यथाक्रमम् ।
अतोऽन्ये दृढमूला श्व सारवन्तो हि याज्ञिकाः ॥ ८ ॥
साधारणा श्चतुर्णान्तु प्रतिमाचे च कर्मणि ।
सामान्यं मुक्तिमुक्त्यर्थं भग मृण्मयवास्मृतम् ॥ ९ ॥

तारहाटकताम्रोत्थ मारकूटमयं तथा ।
एवं हि भूमयो वज्रपाषाणा धातवो द्रुमाः ॥ १० ॥
यज्ञाद्यो खिळा रत्ना स्त्रिवरक्तादिलक्षणा ।
असामान्याः फलेप्सूनां लाभालाभवशा स्पुनः ॥ ११ ॥
सम्यक् स्वमूर्तिमन्त्रैस्तु जपहोमार्चनादिना ।
नये स्सामान्यभाखिव तथा तारकारणार्चनात् ॥ १२ ॥
यजेत् सेन्द्रां धरां शैल मृदापादनकर्मणि ।
एवं पटद्रुमार्थन्तु वरुणं सवनस्पतिम् ॥ १३ ॥
सरत्नानां च धातूनां सम्बन्धेकेन्दुपावकान् ।
रत्नाश्रयेण भातूत्थे [ स्वयं ] नार्चयादेशेन वै विना ॥ १४ ॥
तथार्चनासनेनैव चक्रपद्ममयादिना ।
नराणां प्रतिमा शस्ता ध्यायिनां ध्यानसिद्धये ॥ १५ ॥
केवला लघुमाना च प्रमाणावयवोज्झिता ।
वर्णाश्रमगुरुत्वाच्च स्वामित्वा दखिलस्य च ॥ १६ ॥
भूतादिदेवरूपत्वाच उक्त मार्गेषु वस्तुषु ।
नृप आर्हति वै नित्यं सविशेषपदे स्थितः ॥ १७ ॥
किं पुन र्यो फलाकांक्षी भक्तिश्रद्धापर स्सदा ।
कुर्वेवं चित्रबिम्बार्थी यत्नेनेदं समाचरेत् ॥ १८ ॥
शुद्धकान् गृहदेवांस्तु हरार्घ्यार्घ्यादिना पुरा ।
मलभस्मतुषांगार केशकीटनखा स्तृणम् ॥ १९ ॥
मूलकण्टकचर्मास्थि सामान्ये श्मादिभित्तिका ।
भवत्यनर्थदावश्य मतः प्राक्चतुरंगुलम् ॥ २० ॥
विहाय मृद्दलं भित्ते दीर्घाद्बिम्बात्तु चाधिकम् ।
उक्तदोषविमुक्ताय पंचगव्येन साम्भसा ॥ २१ ॥
मर्दितया मृदा भूय स्तद्भिरंशं प्रपूर्वं च ।
शस्त्रेण काष्टफलकां मृगचर्मसमां पुरा ॥ २२ ॥

छविं विहाय शुद्ध्यर्थं तुरी मुक्तन्तु वै घटम् ।
प्रक्षाल्य सलिलेनैव स्वच्छजलेन सप्तधा ॥ २३ ॥
हृन्मन्त्रेणतु सास्त्रेण मूर्तिं मन्त्राचितेन च ।
तीर्थोद्देशा नदीतीरा त्पुण्यक्षेत्राच्च पर्वतात् ॥ २४ ॥
अपास्य दोषसकीर्णां मृच्वो दादाय मृत्तिका ।
सावचूर्ण्याथ संशोष्या सुपरिष्टे धरातले ॥ २५ ॥
शाण मौर्ण च कार्पासं सूत्रं चालनि [ ससूत्रं चालि ]जं तथा ।
कृत्वा पाषाणभिन्न प्र ग्योज्यं तत्र सवालुकम् ॥ २६ ॥
ईषद्ग्रामयवुक्तेन भूरिक्षीरघृतादिना ।
भावये त्पंचगव्येन खादिरेण कषेण च ॥ २७ ॥
सिद्धार्थकालतिलस्नेह तिलोत्थेन च वै सह ।
क्लेदयेच्च त्रिसप्ताहं भाण्डे कृत्वा यसादिके ॥ २८ ॥
मारुतानलसूर्येन्दु दर्शनेन विनैवाहि ।
तथा समाप्यं तद्विम्बं शुभकाष्ठान्तरीकृतम् ॥ २९ ॥
वज्रवच्चैव लोहानां कृत्वा प्रक्षाळनं ततः ।
मार्जनं भूतिना भूय स्तथा तन्मन्त्रितेन च ॥ ३० ॥
भक्त्या प्रवर्तमानस्तु विम्बसाधनकर्मणि ।
सर्वत्र चास्त्र मन्त्रस्य कुर्यां न्निर्विघ्नशान्तये ॥ ३१ ॥
पूजनं हवनं भूत बलिदानं सदक्षिणम् ।
सम्यक्[ न्मृद् ] ग्रहणकालेतु पत त्सामान्य मेष हि ॥ ३२ ॥
सच्छेददाग्ग्रहणे विशेष स्त्वधुनोच्यते ।
सर्वत्रारम्भकालेतु निमित्त मुपलक्ष्य च ॥ ३३ ॥
विशेषा द्व [ र्थ ] नया धार्यां तच्छुभेन शुभोदयः ।
अशुभेन निमित्तेन यात्रा विघ्नवती भवेत् ॥ ३४ ॥
विरामेणतु जप्येन शान्तिस्वस्त्ययनादिना ।
निवर्तनेन तद्वन्या ददते शुभकृयतः ॥ ३५ ॥

मन्त्र मभ्यर्च्य यात्राया मभ्यर्थ्याज्ञां विनम्य च ।
नैवेद्यशेषभुग्वाम चास्य स्संयतेन्द्रियः ॥ ३६ ॥
प्राङ्मुख स्संस्मरे न्मन्त्रं समुत्थायामृतोदये ।
परिज्ञाय पुरा मूर्ति तन्मूर्त्यन्तर मेव वा ॥ ३७ ॥
याया सदीयं दिग्भागे तदभावात्तु चान्यदिक् ।
सहायै रप्रमत्तैस्तु शिल्पिभि स्सह संवृतः ॥ ३८ ॥
लाजदध्यक्षतैः कुम्भै र्यांवा स्पुष्पपुरस्सरैः ।
सौमनस्यं महोत्साह स्त्वंगस्पन्दश्च दक्षिणः ॥ ३९ ॥
शुभा वाणी ध्वनि श्शांख स्तन्त्री वाद्यं फलादयः ।
गोगजाश्वद्विजाः कन्या नवभाण्डं च मृद्दधि ॥ ४० ॥
आर्द्रमांसान्यलंकारो मदिराग्नी घृतं पयः ।
सिद्धान्नं शालिबीजादि दभा स्सतुमसरी ॥ ४१ ॥
छत्रचक्रध्वजायान रोचना कुंकुम मधु ।
दर्पणं चामर श्चैव धातव श्शास्त्रवर्जिताः ॥ ४२ ॥
रत्नानि वैडूर्य बिम्बं मधु मत्तो द्विजातरः ।
जीवन्मात्स्या निमित्तश्च मनसो यत्प्रसीददम् ॥ ४३ ॥
तत्सर्व दर्शने श्रेष्ठं तत खेदद मशोभनम् ।
स्वगृहद्वारदेशाच्च पथि सम्पदायावि ॥ ४४ ॥
क्रममाणे निमित्तं च फलं यच्छयनेन हि ।
निर्गत्य नगरा द्ग्रामा त्क्रोशार्ध क्रोश मेव वा ॥ ४५ ॥
गृह्णीया च्छाकुनं चिह्नं नकुलादिनयं त्वतः ।
पूर्णा त्सार्धाधिका त्क्रोशाद दितत्त्वमृगदर्शनम् ॥ ४६ ॥
दिङ्मुखे निर्मले सिद्धि र्व्रजे चात्र विशेषतः ।
असकृद्धाम्बरं स्वच्छ सुदीप्ता भास्करादयः ॥ ४७ ॥
महासुरायदस्निग्धः प्रदक्षिणगतिस्थिरः ।
दिव्याद्युत्पातनिर्मुक्त स्सकालसिद्धिसूचकः ॥ ४८ ॥

हंसाःशुको भरद्वाजः कोकिलः खंजरीटकः ।
मयूरो भ्रमर बक याकाषाः खेचरा शुभाः ॥ ४९ ॥
भूपरानकुष्टास्तोग्या सितादि शृंदगोधिता ।
गन्धागुर्जम्बुकश्चैव सर्वेषां दर्शनं शुभम् ॥ ५० ॥
मृगाणां हरिणास्तद्वो व्याघ्रशशकचित्रकाः ।
सिद्धिसंग्रहकास्सर्वे सर्वेषां विदितन्तुवै ॥ ५१ ॥
प्रदक्षिणं विशेषेण क्वापये जम्बुक शुभः ।
द्विजादिकं [ दीनां ] रुतं स्निग्धं सिद्धिकृतसवोत्पदम् ॥ ५२ ॥
समुत्पन्ने निमित्ततु धातुसंक्षेपकर्मणि ।
प्रतीक्षितं नयुञ्जेत यदाशान्ति सदाचरेत ॥ ५३ ॥
पूर्वोक्ता चित्तशुद्धमर्प सविशेषां सदक्षिणाम् ।
प्रविश्यविधिवाक्षेत्रं निरीक्षेत स्वतेजसा ॥ ५४ ॥
पश्येच्छिलागुणवर्ती सर्ववाकर्मणिक्षमम् ।
वर्जयेदतिवृद्धाञ्च परीक्षीणावचंतया ॥ ५५ ॥
सभङ्गांदावदग्धांच निश्शब्दां रूक्षविग्रहाम् ।
सषाङ्गकांच सच्छिद्रां बिन्दुयुक्तांपुयोद्वहाम् ॥ ५६ ॥
आखुदर्दुरमीनाहि मार्जारशशकोपमाम् ।
सुवर्णपरवर्णोऽथ सिराजालेन सन्तता ॥ ५७ ॥
मागुक्तरूपस्याभावा दर्मीचांप्रदर्णंहितम् ।
पारावतशुकाब्जाभा मधुमाञ्जिष्ठमाषभा ॥ ५८ ॥
गुर्वीह्याशुभास्निग्धा अतोवान्याभिशस्यते ।
सुहृद्ये भूतले मग्ना जलाशयतलस्थिता ॥ ५९ ॥
छत्रातरुवरेणैव वनराजिष्ववस्थिता ।
वेष्टितावल्लिबृन्देन सर्वेबोषधिभिर्वृता ॥ ६० ॥
ऊर्ध्वगाजानदेशाच्च एकपिण्डीकृताभृगोः [ मृद्धः ] ।
मोक्षदाचखवक्त्रावै भोगदासुतलानना ॥ ६१ ॥

दिङ्मुखीचोभयकरी प्राङ्मुखांभूतिरायुषे ।
अतोन्यमस्तकाकीर्ति यशोवृद्धिकरीमता ॥ ६२ ॥
वंशवृद्धिदमारोग्य शान्तिकृत्कंयदाप्यदिक् ।
पुष्टिमुन्नतिसन्मेधां यच्छत्युत्तरमस्तका ॥ ६३ ॥
एवंपुरापरिज्ञाय पृष्ठोदचरणंशिरः ।
बलात्मनासवीर्येण प्रोद्धृत्यसहशिल्पिभिः ॥ ६४ ॥
प्राङ्मुखंचोत्तरस्यांवै प्राग्भागेचोत्तराननम् ।
स्थलेवतार्यमन्त्रेश मिष्टान्नस्त्रक्चन्दनादिना ॥ ६५ ॥
ध्यात्वाधिकान्तसंस्थं सम्पूज्यजुहुयात्ततः ।
उक्तदिग्विहितस्यैव देशेकुण्डेथवास्थले ॥ ६६ ॥
दत्वापूर्णाहुतिंध्यान जपयुक्तःक्षपेदहः ।
निशागमेर्चनंकुर्या द्बलिभिर्भूततर्पणम् ॥ ६७ ॥
नैवेद्यशेषमश्रीया न्मन्त्रविन्यस्तविग्रहः ।
तद्दक्षिणेनदर्भेषु माविछराःप्रस्वपेज्जपन् ॥ ६८ ॥
पूर्ववत्स्वप्नलाभार्थं सुप्याय रजनीक्षये ।
कुर्यात्स्वकार्यं जुहुया दशुभस्वप्नशान्तये ॥ ६९ ॥
अभिनन्द्य शुभे स्वप्नं हृदयावर्जकं स्फुटम् ।
पर्वतं च स्व मात्मानं स्थाने तदुपलं स्थलम् ॥ ७० ॥
स्फटिकामलसंकाशे पद्मे वा तप्तहेमवत् ।
निर्धूमांगारकूटाभं तदाशु लभते शुभम् ॥ ७१ ॥
सशस्त्र मथ चादाय मुद्गरं चास्त्रमन्त्रितम् ।
प्राङ्मुखश्चतुरो धारां स्ताडयेन्मस्तकावधेः ॥ ७२ ॥
पाददेशाच्च वा मध्या द्देवस्य च फलं पुरा ।
चतुरश्रायतां कृत्वा शिलां पीठेन यन्त्रगाम् ॥ ७३ ॥
आनाय्य वा पृथक्पीठां छन्नां कमालयं शुभम् ।
विन्यस्य वै पुरा तेन विधिना चोद्धरे च्छिलाम् ॥ ७४ ॥

पीठार्थं भिन्नवर्णा च तद्रूपां वा यथेच्छया ।
अंगांगिभाव गुणव दपदां तु महामते ॥ ७५ ॥
काष्ठलोहमणीनां वा प्यलाभे सति वै शुभम् ।
सति लाभे न वै कुर्या द्वैषम्य व्यत्यय च वा ॥ ७६ ॥
तत्काल मेव चाहृत्य रत्नाधारां शिलां शुभाम् ।
पुंस्त्रीनपुंसकोत्थाभि श्शिलाभि स्स्यात्तथा [त्रितयं] हितम् ॥७७॥
बिम्बाख्यं विद्धि चाभावात् सर्व बिम्बो पलात्तु वै ।
निषिद्धं भगवद्बिम्बं रत्नपीठमयोपलात् ॥ ७८ ॥
छत्रन्याचा देवताकारा स्स्त्रोपला स्सर्वसिद्धिदाः ।
या हता ऽ नलबिन्दून्वै सनाद माभिमुंचति ॥ ७९ ॥
पुमानिति शिला सा वै निस्तेजा स्स्वना ऽ बला ।
आदिमध्यावसानेषु नाग्निं यस्या नच ध्वनिः ॥ ८० ॥
नपुंसकेति सा ज्ञेया स्वपदस्था फलप्रदा ।
शिलाग्रहण मित्युक्त दारुग्रहण मुच्यते ॥ ८१ ॥
आपर्वतान्तस्सच्चारो निर्व्रणं सरलं बृहत् ।
रोग मुक्तं न विहाये प्राहूनर्वं स्सक्षतीकृतम् ॥ ८२ ॥
नानिलाशनिदावाग्नि हतवीर्यं न वाह्यगम् ।
सलक्षणेतु सुस्निग्धे भूभागे चोन्नते स्थितम् ॥ ८३ ॥
प्रागवत्तमधिवास्यादौ परेद्व्यर्चये तत ।
तदाश्रिता मविज्ञात स्वरूपां देवतां पठन् ॥ ८४ ॥
इहाश्रितायै तुभ्यं नम स्सर्वेश्वराय च ।
क्षमस्वावतरान्यत्र सन्तिष्ठात्र चिदात्मना ॥ ८५ ॥
अथाक्षोदकशुद्धेन विलिप्तेन घृतादिना ।
जपन् मन्त्रवर वौषट् छिन्द्या द्वै क्रकचादिना ॥ ८६ ॥
प्राच्या सुदीच्या मैशान्या पतत्यभिमुखं यदि ।
परिशेषं शुभं कुर्या दन्यपातेर्चनादिकम् ॥ ८७ ॥

शनाय्या देवभागं चा प्यनादेयेन वै विना ।
विम्ब मिच्छन्ति वै कर्तुं वार्क्षं चैवाति विस्तृतम् ॥ ८८ ॥
अनेकभुजयक्राद्यभूषितं तत्तत्स्थितैः ।
भिन्ने स्वपवे मान युक्ते दुं [ श्रि ] ष्टे नं दुष्यति ॥ ८९ ॥
भक्ति श्रद्धा वशाच्चैव सर्वं चार्णं मयं यतः ।
एवमेकतमस्यापि भक्तिपूर्वस्य वस्तुनः ॥ ९० ॥
संग्रहंच पुराकृत्वा कुर्यादाकारमीप्सितम् ।
तादर्थ्येनतुसामान्यं सौम्यमानं पुराशृणु ॥ ९१ ॥
ऋज्वाख्य मविकारंच व्यापक स्वैकमूर्तिमत् ।
भूभागे सुसमेश्लक्ष्णे मानमुद्धीयतंनवे ॥ ९२ ॥
निरूप्यावयवानांच लक्ष्मविस्तृतिपूर्वकम् ।
अष्टाधिक शतांशोय स्त्वोन्नतेरगुलश्चतत् ॥ ९३ ॥
द्वे अंगुलेकलानेत्रं गोळक भावएवच ।
अंगुला दष्टभागोय स्तयवः परिकीर्तितः ॥ ९४ ॥
पट्कलंचपरिज्ञेयं ताल विम्बादि कर्मणि ।
मुखांगनाभि मेढ्रक्षा स्तालमाना स्त्वथोरयुक् ॥ ९५ ॥
द्विकलेच तथाजघे गुल्फजानुगळंचकम् ।
व्यगुलं चांगुलक्षेप मित्युन्मात मुदाहृतम् ॥ ९६ ॥
जटाधराणां विम्बानां दीर्घहृस्व वशेनतु ।
चतुष्कलंच त्रिकल स्थानम्मानाद्बहिः क्षिपेत् ॥ ९७ ॥
त्रिपंच सप्तशिरसो मौलिरष्टकलोन्ततः ।
निर्जटानां ललाटोर्ध्वे मकुटवा सुशोभनम् ॥ ९८ ॥
तालेन ह्रासवृद्धीतु कार्यंतत्र व्यपेक्षया ।
यथोदितेषु भागेषु एकैकेनां गुलेनतु ॥ ९९ ॥
आस्यनासा ललाटार्थं वदनांशंभजेत्रिधा ।
ततोग्रतः कलामानं घ्राणस्या तिलपुष्पवत् ॥ १०० ॥

कळार्धेनतुविस्तार स्स्तोन्नतिस्तत्पुटद्वये ।
नासाग्र श्वासनिर्मुक्तं गोजीमानं चतुर्यवं ॥ १ ॥
तच्चतुर्यवमानेन घ्राणाग्रेणान्तरीकृतम् ।
अर्धांगुळंचोत्तरोष्ठ मधरोष्ठन्तुचांगुळम् ॥ २ ॥
गोळकंचिबुकंविद्धि सृक्विण्यौ चतुरंगुळे ।
आयस्य नासिकांशस्य मध्यभाग समाश्रिते ॥ ३ ॥
कुर्यान्नेत्रभ्रुविच्छिद्रे तयनेत्रे कळान्तरे ।
कळायामसमन्देर्घ्यात कळार्धेनतुविस्ततम् ॥ ४ ॥
पद्मपत्र दळाकारं द्वियवेनाधिकन्तुवत् ।
कुर्यात्पद्म दळाकारं नेत्रार्धं वृत्ततारकम् ॥ ५ ॥
तारादैर्घ्यत्रिभागेन त्वायस्यान्यस्यपधिका ।
यवेन केन सार्धेन ज्योतिस्तत्पंचभागिकम् ॥ ६ ॥
त्रिभागेनापि विहितं तत्पद्मदळलोचन ।
द्वियवभ्रमनेत्रकोणं विस्तारेणयवाधिकम् ॥ ७ ॥
सार्द्धांगुळद्वयंदैर्घ्यात् भ्रूळते द्विकळेस्तु ? ।
मध्यतो द्वियवेनाळ चन्द्रतुल्ये क्रमसवे ॥ ८ ॥
तदन्तरं कळार्द्धंच ताकोटी समसूत्रके ।
श्रोत्रद्वयंगुळविस्तीर्णे आयामेन द्विगोळके ॥ ९ ॥
द्वियवः कण्ठपरिधिः पर्वणीद्वे चतुर्यवे ।
मध्यन्ताभ्यां तथाविद्धि श्रोणीसार्धांगुळान्वये ॥ ११० ॥
कळार्धेनतुतच्छिद्रं पाशमानं यथारुचि ।
अंगुळाद्विकळान्तस्तु वैषम्यमपि तत्रयत ॥ १ ॥
अन्तश्छिद्र विनिर्मुक्तं वद्विशेयं चतुर्यवम् ।
षदङ्कं कर्णोपेत मेवं श्रोत्रद्वयं स्मृतम् ॥ २ ॥
चतुष्कळं ळलाटन्तु शिखरे द्वे द्विगोळके ।
तच्छाया स्त्र्यंगुळेचैव भ्रमतांगुळ विस्तृते ॥ ३ ॥

केशभूमेस्समुद्भूतं ललाटोपरिसंस्थितम् ।
कुर्यात्स्कलार्द्धमानन्तु वक्रव्यालकसंचयम् ॥ ४ ॥
कपोलपरिधिं कुर्यात्स्कर्णात्स्कण्ठगतं समम् ।
तन्मध्ये वर्तुलौ गण्डौ परिच्छिन्नौ पुरोदितैः ॥ ५ ॥
शिरसःपरिणाहन्तु विद्धि षट्त्रिंश दंगुलम् ।
श्रोत्रकोटिद्वयाच्चैव मस्तकस्य यदन्तरम् ॥ ६ ॥
तत्षोडशांगुलंविद्धि वेत्तिभ्यां पृष्ठतस्तया ।
सार्द्धतालंपरिज्ञेयं ललाटात्कगुहान्तरम् ॥ ७ ॥
सत्कम्बुसदृशीग्रीवा मूलमध्याग्रतोहिसा ।
परिधे द्वादशकला एकविंशांगुलाग्रतः ॥ ८ ॥
अष्टादशांगुलाचैव स्वांशात्तत्र्यंशेनविस्तृता ।
तन्मूलं विस्तृतौस्कन्धौ तुंगौ वृत्तायतौ समौ ॥ ९ ॥
षडंगुलन्तद्बाहुल्यं बाहुमान मथोच्यते ।
स्कन्धोत्तमांगं त्रिकलं तन्ध्यन्तं षट्कलं स्मृतम् ॥ १२० ॥
स्कन्धेर्वैमणिबन्धान्तं मानं नवकलं स्मृतम् ।
मणेर्मध्यमशाखान्तौ हस्तास्सप्तांगुलोमतः ॥ १ ॥
परिज्ञेयं कलाहीनं तन्मानम्मध्यमांगुले ।
तच्चतुर्थयहीनाच सानामातुप्रदेशिनी ॥ २ ॥
द्विकलाचपरिज्ञेया सांगुष्ठातुकनीयसी ।
द्विपर्वाचस्मृतोंगुष्ठ स्सर्वाश्चांगुलिविस्तृताः ॥ ३ ॥
सर्वासांमूलपर्यन्ता ह्रासयेच्चयवंयवम् ।
अग्रपर्वार्द्धमानेन कार्यालिंगोपमानखाः ॥ ४ ॥
मानमंगुष्ठमूलस्य परिधिश्चतुरंगुलम् ।
तच्चतुर्थयहीनंच ज्ञेयंत्रिष्वंगुलीषुच ॥ ५ ॥
मूलां [ न्यूनांगुले ] गुले-कलाधार्द्धा भाग्वस्त्रासश्च वेष्टनात् ।
अंगुष्ठमंगुलंचाघा त्रिस्रोन्याष्पञ्चयवास्मृताः ॥ ६ ॥

अर्धांगुळ यतोन्यूना विद्धिमध्यं क्रमक्षतम् ।
नखळक्ष्मी [ चळक्षा ] यमंचाग्रात् सांगुळं द्विकलंकरम् ॥ ७ ॥
ईषन्निम्नतलंचैव लक्ष्मरेखाविभूषितम् ।
शाखामूलावधेःपाणौ बाहुल्यन्द्वयवंगुळम् ॥ ८ ॥
चतुर्यवाधिकंचैव मणिबन्धावधेस्स्मृतम् ।
मध्येकलार्धहीनन्तु तद्बाहुळ्यमुदाहृतम् ॥ ९ ॥
मणिबन्धावधेर्बाहु वेष्टनषट्कलंस्मृतम् ।
स्कन्धेस्सप्तकलंविद्धि सांगुळत्रयमप्युत ॥ १२० ॥
हीनमध्यांगुळेनैव मूलद्वैनवगोळकम् ।
तथैवस्कन्धेरूर्ध्वन्तु विस्तारः प्राग्वदत्रच ॥ १ ॥
अत्रापि पूर्ववत् दृष्ट्या कार्यान्तस्या क्षिति स्स्वयम् ।
तालं गळावधे स्त्यक्त्वा तन्मानेनान्तरीकृते ॥ २ ॥
स्तनद्वयं समं कुर्या त्तद्वारा च समांसळा ।
निम्नं हृद्गोळकार्धेन ऊर्ध्वतो स्त्रराद्युतम् ॥ ३ ॥
स्तनाभ्यां त्रिकलौ पार्श्वौ त्रियवं स्तनमण्डलम् ।
यवोन्नतं तथाचाग्राद् विस्तृत वेन चूचुकम् ॥ ४ ॥
लोचनं त्रियवं सार्ध कक्षमान मुदाहृतम् ।
स्कन्धमानविनिर्मुक्त पृ [ प ] द्यमंशावधे स्स [ज्ञा] मम् ॥ ५ ॥
द्रोणीनिकाशसदृशं मध्यराशे स्समांसळम् ।
कक्षान्तवेष्टनं विद्धि पंच तालं सुलोचनम् ॥ ६ ॥
विनांगुळद्वयेनैव द्वे ताले द्विगुणीकृते ।
यवत्रयसमायुक्तं विद्धि तत्कुक्षिवेष्टनम् ॥ ७ ॥
त्रियवोनेकलामानं विज्ञेयं नाभिमण्डलम् ।
तन्मानेन त्र्यवोनन्तु तन्निम्नत्वं विधीयते ॥ ८ ॥
परिधि र्नाभिमध्येतु निवाळ स्स विलोचनः ।
यद्गोळकंच तन्मानपरिद्वयर्ध कटे स्मृतम् ॥ ९ ॥

करिकुम्भोपमौ पीनौ परितः पंच गोळकौ ।
स्फिजौ कौपीनराजीच द्व्यंगुळा मूळतः स्मृता ॥ १४० ॥
परितोंगुळमाना सा मेढ्रन्तु त्रिकळं स्मृतम् ।
चतुर्यवश्च तत्कोशं वेष्टनन्तु षडंगुळम् ॥ १ ॥
द्व्यंगुळौ वृषणौ दैर्घ्या न्मूळान्तसमविस्तृतौ ।
परितो द्वियवं [ द्व्यंगुळं ] विद्धि वायुरन्ध्रं सुवर्तुळम् ॥ २ ॥
ऊरुमानं परिक्षेपं मध्यभूमे र्नवांगुळम् ।
षट्कळं मूळदेशाच्च अग्रान्तं त्रिकळं स्मृतम् ॥ ३ ॥
हीनमेकांगुळेनैव द्विकळं जानुमण्डलम् ।
विस्तारेणोन्नतत्वेन चतुर्यवसमन्तु तत् ॥ ४ ॥
जंघामूले परिक्षेपे वेष्टनं नवगोळकम् ।
द्विसप्तांगुळक मध्ये सार्धपंचांगुळं [ कळं ] ततः ॥ ५ ॥
अत्रापि वेष्टना द्विद्धि तुर्तीयांशेन विस्तृतिम् ।
मध्यमूलावसानेभ्यो विस्तार मनुगुण्यतु ॥ ६ ॥
भुजाभ्यां मध्यदेशस्य तथांगुलिगणस्य च ।
ऊरुयुग्मस्य जघाभ्या मापाद्यद्विपहस्तया ॥ ७ ॥
सताळभागमानं च दैर्घ्यं मे चारणं स्मृतम् ।
पार्ष्णीद्विगोळकततेतन्मध्ये सांगुळे कळे ॥ ८ ॥
त्रिकळं चाग्रत श्चैव बाहुल्येन कळासमम् ।
पद मंगुष्ठनिकरा त्रियवोनं प्रकीर्तितम् ॥ ९ ॥
बाहुळंच कलामानं गुल्फदेशाच्च सांगुलम् ।
कनीयोंगुळिमूळाच्च गुल्फान्तं पिण्डिकांगुळम् ॥ १५० ॥
जघावसानदेशाच्च वेष्टनं सप्तलोचनम् ।
कळाहीनं तदैवाग्रात परिणाहो विधीयते ॥ १ ॥
चरणं विधिनानेन कूर्मपृष्ठं समाप्य च ।
त्र्यंगुळेन च तद्दैर्घ्यां दंगुष्ठस्य च दीर्घता ॥ २ ॥

पंचांगुळःपरिज्ञेयः परिधिस्तस्यळांगळिन् ।
यवद्वयाधिकाकार्या तद्देर्घ्यात्तुप्रदेशिनी ॥ ३ ॥
अंगुष्ठायामतुल्याथ कार्यावैभादमध्यगा ।
मध्यांगुळेद्विरष्टांश हीनावदनुयास्थिता ॥ ४ ॥
तद्वत्तदनुगायाच त्रिपर्वास्तास्तु पूर्ववत् ।
संयुक्तानखजाळेन कूर्मपृष्ठोपमेनच ॥ ५ ॥
द्विकळन्तुकळा [ यवा ] र्द्धेन पादतर्जनिवेष्टनम् ।
चतुश्चतुर्यवोनंच तच्छेषाणां प्रकीर्तितम् ॥ ६ ॥
यवांशेनपेष्टनाद्विद्धि सर्वासोचैवविस्तृतिम् ।
सर्वेषमोष्ठळास्सौम्या स्समास्स्वयवाश्शुभाः ॥ ७ ॥
दशनावळिबाह्यस्थे दंष्ट्रेस्तमयवोन्नते ।
यवद्वयोन्नतंमानं मध्यद्वन्द्व चतुष्टये ॥ ८ ॥
तत्पक्षगानांसर्वेषां भागविद्धिचतुर्यवम् ।
त्रियवद्विजविस्तार मग्रान्मूळाद्यवद्वयम् ॥ ९ ॥
तास्ताधर्मध्यदेशाञ्च सर्वेदन्तानिरन्तराः ।
लोमप्रदक्षिणावर्त मपुज्जन्मोत्थितं शुभम् ॥ १६० ॥
सुनिश्चितंहितचैव ध्यानमव्यभिचारियत् ।
मनोहारित्वमेकत्र रूपलावण्यभूषितम् ॥ १ ॥
सर्वदाध्यानयोर्विद्धि अन्योन्यत्वेनसंस्थितिम् ।
सदौन्दर्यन्तुमानस्य क्वचिदाक्रम्यवर्तते ॥ २ ॥
लावण्यस्यक्वचिन्मार्ग समाच्छाद्यावतिष्ठते ।
यथातिरूपवान्लोके दरिद्रोप्येतिमान्यताम् ॥ ३ ॥
विरूपोप्यतिवित्ताढ्यो नारूपोनैवनिर्धनः ।
एवंद्वयोज्झितबिम्ब मनादेयत्वमेतिच ॥ ४ ॥
आदेयमेकयुक्तंच नित्यंयस्मात्सदामते ।
सम्यङ्मानेचसौन्दर्ये भक्तानुग्रहकाम्यया ॥ ५ ॥

मन्त्रसन्निधिशक्तिर्वै सफलाद्यवतिष्ठते ।
सावम्यकप्रतिपन्नस्य बिम्बेदृग्गोचरस्थिते ॥ ६ ॥
आमूर्ताह्लादयत्याशु ज्ञात्वैवं यत्नमाचरेत् ।
मानोन्मानप्रमाणाना मथसौन्दर्यसिद्धये ॥ ७ ॥
ऋजोस्सुसमपादस्य ष्यंगुळंचरणान्तरम् ।
तद्द्वैविषमपादस्य अग्रात्तालसमंस्मृतम् ॥ ८ ॥
तत्पार्ष्णिद्वयमद्ध्यात्तु परिक्षेपंद्विगोळकम् ।
स्थित्यर्थंग्रहणनात्याये तथामार्गद्वयस्यच ॥ ९ ॥
सूत्रेणसुसमेकुर्या द्देदोर्येदक्षिणोत्तरे ।
समपादस्यबिम्बस्य ललाटान्मेढ्रमस्तकम् ॥ १७० ॥
प्रसार्यसूत्रमाच्छाद्य तेननाभिहृदन्तरम् ।
घ्राणाग्रमळकानांच सन्धिर्यस्तिलकोर्ध्वगः ॥ १ ॥
एवंविषमपादस्य दक्षांगुष्ठाग्रगंनयेत् ।
गात्रसाम्यंसमापाद्य क्षेत्रात्क्षेत्रगतेनच ॥ २ ॥
सूत्रेणसर्वबिम्बानां वैषम्यविनिवृत्तये ।
चतुस्त्रिद्व्यग्निपरितः परिशुद्धायतश्शुभा ॥ ३ ॥
अशुभापरिशुद्धात्तु बिम्बोत्पावयवीस्थितिः ।
ललाटमश्ववक्त्रस्य विस्ताराद्द्वादशांगुळम् ॥ ४ ॥
अष्टलोचनमायामा दग्रतश्चतुरंगुळम् ।
कलार्द्धंसुषिरेघ्राणे रन्ध्रेभागान्तरीकृते ॥ ५ ॥
अष्टांगुळेतु हनुके सृक्विण्यौ द्वेच तत्समे ।
मध्यत श्श्रोत्रशुक्ती द्वे द्व्यंगुळे द्विकलोन्नते ॥ ६ ॥
द्व्यंगुळं घ्राणवंशन्तु तदूर्ध्वं द्विकलं स्मृतम् ।
विद्धि वक्त्रविकासं च द्वियवं चाग्रतः क्रमात् ॥ ७ ॥
तमेवहि यवांशेन हन्वन्तं तनुतां नयेत् ।
घ्राणवंशस्य पक्षौ द्वौ मध्यनिम्नौ च संहतौ ॥ ८ ॥

यवद्वयेन सार्धेन दृग्घ्राणाभ्यां तु चान्तरे ।
अधोदृक्कन्तु दृग्द्रोणे यवमानेन संचितम् ॥ ९ ॥
ललाटं सालकं प्रावत् दृङ्मध्यं सांगुला कला ।
नृसिंहस्य मुखे विद्धि परितः श्राष्टलोचनम् ॥ १८० ॥
ततोष्ठकण्ठदेशाच्च कुर्यात् कर्णद्वयोज्झितम् ।
तत्कर्णद्वयमानेन ललाटान्तं नयेत्पुनः ॥ १ ॥
प्रमाणा १मा क्रमणीताच्च संरम्भाघ्रातलक्षणम् ।
प्रफुल्लविकसच्छिद्रं घ्राणं वंशाञ्चितं भवेत् ॥ २ ॥
तच्छिद्रपूर्वमानाच्चा ध्वस्य वै त्रियवाधिकम् ।
सगोळ मुत्तरांगेषु, सकलांशं च लोचनम् ॥ ३ ॥
अधरोष्ठः परिज्ञेयः स चतुर्यव मंगुलम् ।
सार्ध चतुष्कलं चक्रं शेषायामो हनो स्स्मृतः ॥ ४ ॥
तद्विकासः परिज्ञेयो नेत्रमानं यवाधिकम् ।
अग्रतो ग्रास मायाति सृक्विणपन्तं हि चांगुलम् ॥ ५ ॥
सर्ववृत्तं तदर्धेन नेत्रयुग्मं सविस्मयम् ।
पूर्ववद्विस्तृतं श्रोत्रं कलार्धेन तदुन्नतेः ॥ ६ ॥
तुल्या चेन्दुकला युग्मयोगस्य भ्रूविगोलका ।
तन्मध्यन्तु कलामानं शंखावर्तोपम म्मदृत् ॥ ७ ॥
भागमान सटावृत्तं कार्यं तच्छिरसि स्फुटम् ।
दैर्घ्येण सार्धतालं च क्ष्माधरस्याननं स्मृतम् ॥ ८ ॥
विस्तारेण ललाटाच्च तन्मानं द्व्यंगुलोज्झितम् ।
सौम्यरूपस्य च विभोः प्रोच्यतस्य कलोज्झितम् ॥ ९ ॥
तच्चतुर्थांशमानेन पोत्रदेशस्य विस्तृतिः ।
तस्योपरिष्टा द्बाहुल्यं तत्समं चांगुलन्त्यधः ॥ १९० ॥
दन्तद्वयस्य वै मानं सार्धं सत्रांगुलं स्मृतम् ।
शेषमाननरन्ध्र तु सृक्विणीभ्यां यदन्तरम् ॥ १ ॥

तद्विकासश्च सार्धेन कलार्धेनाग्रदेशतः ।
स एवांगुलमानेन विज्ञेय स्सृक्विणीद्वयात ॥ २ ॥
घ्राणरन्ध्रश्च वक्रोक्ते दंष्ट्रे द्वयर्ध [ त्वर्ध ] कलांग्रते ।
नासावंशं यथापूर्व कदलीनाडिपृष्ठवत ॥ ३ ॥
श्रोत्रे वाजिमुखोक्तेतु कोटे स्सप्तकलान्तरे ।
तत्तुल्ये लोचने किन्तु प्रान्ततीक्ष्णे यथोज्झिते ॥ ४ ॥
एतेषां विहिता ग्रीवा ह्यंगुलिद्वितयेन तु ।
प्रत्येकदेशा त्संयुक्ता सौम्यमूर्त्युदिता च या ॥ ५ ॥
वितोच्छ्रायेण नृहरे र्यस्य गात्रस्य या प्रमा ।
सा सा सवेष्टना द्वयाला त्कलार्धेनाधिका भवेत् ॥ ६ ॥
वक्षः कट्युदरांवस्फि ग्कलामानाधिकानि च ।
तथैव नखपत्राणि देह श्चास्य समांसलः ॥ ६ ॥
सम्पूर्णो दक्षिणावर्तै र्लोमभि श्चातिकुंचितैः ।
त्रिचतुःपंचवक्त्रस्य विनैवोर्ध्वमुखेन तु ॥ ८ ॥
दक्षिणोत्तरवक्राभ्यां ह्यास्यं कुर्या द्विगोळकम् ।
विकास स्त्विह्यवक्रोक्त उदग्वक्त्रस्य तत्र च ॥ ९ ॥
समो दक्सन्निवेश स्तु चतुर्णां मोक्षसिद्धये ।
आरोग्यभोगकैवल्यप्राप्तये धांगुळेनतु ॥ २०० ॥
कुर्या त्सव्यापसव्याभ्या मधो दक्सन्निवेशनम् ।
सह पूर्वानने चैव सम्यक्प्रत्यङ् मुखस्य च ॥ १ ॥
निष्ठा [ ष्का ] सा यामविस्तारग्राणदृक् भूश्रुतिष्वथ ।
ईषत्तिर्यक्क्षितिन्यस्त दृङ्मुखं दक्षिणं शुभम् ॥ २ ॥
तद्वच्च पौग्दग्वक्र मुत्तरं सर्वसिद्धिकृत ।
स्वकार्यसूचना न्यूनं तन्मन्त्रस्य च सन्निधिः ॥ ३ ॥
अतोन्यथा समाश्रित्य शान्ति मास्ते च मन्त्रराट् ।
निर्यं यत्सन्निधानाच्च भूतवेताळराक्षसाः ॥ ४ ॥

आदर्शना त्पलायन्ते आविशन्ति च दर्शनात् ।
आदाय शिरसा मन्त्रिसमाज्ञां सम्प्रयान्ति वे ॥ ५ ॥
अत स्समाचरे यत्ना येन स्या द्बिम्बसन्निधिः ।
नाहि तत्सन्निधाना द्वे कश्चि दारभते शुभम् ॥ ६ ॥
वराहदंष्ट्रं धिक्षाक्षं तथा चिपिटनासिकम् ।
विधेयं पंचमं वक्र पंचवक्त्रस्य वै विभोः ॥ ७ ॥
अस्याधरोत्तराभ्यां त्वप्योष्ठाभ्यां समता भवेत् ।
विभिन्नतांगुलार्धेन ताभ्यां तन्मध्यगा स्फुटा ॥ ८ ॥
कार्या दशनपाळी वै मूलमध्याग्रत स्समा ।
कलार्धेनोत्त्वणं वृत्तं तद्वण्डद्वितयं ततः ॥ ९ ॥
द्विकलं चाग्रतःश्मश्रु कलाचार्धकलाक्रमात् ।
सम्बन्धवेणिः पूर्वोक्त मानेन शुभकृद्भवेत् ॥ २१० ॥
सिंहसूकरवाग्या [ न्मु ] ख्यवक्त्राणां सौम्यतां नयेत् ।
प्रमाणं द्गगता छक्षा द्व्यवहारमयात्तु वै ॥ १ ॥
विकास श्चाश्ववक्त्रोक्त स्सौम्यरूपस्य भूभृतः ।
तदाद्योक्तस्तु नृहरेः प्रागुक्तो य स्सचोदितः ॥ २ ॥
तथा वक्त्रांगभाविते विभो श्शाक गिश्वरस्य च ।
हारनूपुरवस्त्रस्फटकांगदभूषिता ॥ ३ ॥
माल्योपवीतकेयूर मकुटाद्युपशोभिता ।
प्रतिमामन्त्रमूर्तीनां कृता भवति सिद्धिदा ॥ ४ ॥
पत्तुरा पंचधा प्रोक्तं वादनं प्राणदैवतम् ।
तस्य विम्बसमुत्थेन ताळेन मुखमण्डलम् ॥ ५ ॥
द्व्यंगुलन्तु ललाटोक्तं जटाबन्धो द्विलोचनः ।
द्व्यंगुलेनोन्नतः कण्ठः उरः पंच कलं स्मृतम् ॥ ६ ॥
अष्टांगुळं सदुदरं कटिः पंचांगुलोन्नता ।
नवांगुलायता ऊरू जानुनी द्व्यंगुळे स्मृते ॥ ७ ॥

अष्टांगुलोच्छ्रितेजंघे द्व्यंगुलेपादपिण्डके।
दाममेकंकलाहीन न्तद्द्वीवापार्श्ववेष्टनम् ॥ ८ ॥
बिम्बतुल्यापरिवेषा सर्वदास्यांगविस्तृतिः।
तद्विभागाधिकंविद्धि वेष्टनंह्युदरस्यच ॥ ९ ॥
परिधिःकटिदेशस्य चतुर्नेत्राधिकस्तुवै।
बिम्बोस्तन्मदशंविद्धि तदूर्वोर्मूलवेष्टनम् ॥ २२० ॥
तदेवजंघामध्यस्य जंघान्तस्यतदेवहि।
पादंपंचकलायामं चतुरंगुलविस्तृतम् ॥ १ ॥
ग्यंगुलंपाणिदेशाद्य अंगुष्ठोर्धकलासमः।
शिष्टेयामंप्रदेश्यां [ देशा ] द्यपयो [ ये ] नांगुलयःक्रमात् ॥ २॥
नाभिरन्ध्रंसुविस्तीर्णं द्व्यर्धलोचनविस्तृतम्।
मध्यमांगुलिपर्यन्तं मणिबन्धान्नवांगुलम् ॥ ३ ॥
त्रिकलःपाणिविस्तार स्तत्रत्यानिशिरोंशवाः।
तद्वाहुमस्तकंविद्धि तच्छायेणद्विलोचनम् ॥ ४ ॥
भुजोपभुजयुग्मंवत् तद्वितालसमंस्मृतम्।
कलार्धेनाधिकंबिम्बं बाहोस्तद्वाहुवेष्टनम् ॥ ५ ॥
बिम्बोस्तांसद्वितीयेय [ ? ] स्तनभूर्लोचनोल्वणा।
वृत्तवैपुल्यमानेन लोचनेपद्मपत्रवत् ॥ ६ ॥
भ्रूयुगंनरसिंहोत्थं घ्राणाग्रंशुकचंचुवत्।
कलार्द्धमानंदीर्घंच तद्वंशंगजपृष्ठवत् ॥ ७ ॥
स्वायामदीर्घतत्पक्ष युगलंकुक्षिदेशगम्।
तदेवदैर्घ्यादर्धेन विस्तृतंहंसपक्षवत् ॥ ८ ॥
स्वपक्षमानाद्द्विगुणं तत्पुच्छंशतशाखकम्।
सपक्षमिममायामं सात्यंत्यवयवान्वितम् ॥ ९ ॥
सर्वेषांविद्धिसामान्यं विशेषाख्यमथोच्यते।
ऊरुद्वयान्नवेमास मंगुलानांत्रियंतथा ॥ २३० ॥

जंघाकाण्डोच्छ्रितेकुर्यां जंघाभ्यांचात्रवेष्टनम् ।
विंधाख्यंमणिबन्धस्य सममूलांमहामते ॥ १ ॥
ज्वालदेशात्तदर्धेन सहचार्धांगुलेनतु ।
पादेज्वालपरिज्ञेयं विस्तारेणषडंगुलम् ॥ २ ॥
शेषंसायोदितंसर्वं सर्वेषांविद्धिसर्वदा ।
किन्तुपादोज्झितौपक्षौ दैर्घ्यात्तद्दलविस्तृतौ ॥ ३ ॥
एपार्श्वोड्डीयमानानां स्वायामापक्षविस्तृतिः ।
पंचानांचपरिज्ञेया स्थितानामर्धलक्षणा ॥ ४ ॥
एतदादायमानन्तु पुच्छभूपक्षवर्जितम् ।
विद्धिवामनरूपस्य लक्षणंकिन्तुलांगलिन् ॥ ५ ॥
ललाटनासावक्त्रेभ्य स्त्वमादायांगुलत्रयम् ।
मस्तकस्योपरिष्टात्तु जटाबन्धंप्रकल्पयेत् ॥ ६ ॥
जटावसानमायामं यथास्यात्पंचतालकम् ।
इत्युक्तंलेशतोबिम्ब लक्ष्मपीठमथोच्यते ॥ ७ ॥
बिम्बानामुपविष्टानां चतुरश्रन्तुतद्भवेत् ।
चतुरश्रायतश्चैव मोस्थितानांसदैवहि ॥ ८ ॥
वृत्तवृत्तायतत्वेन ह्यनयोरूपमन्यथा ।
यांगुलैः परमाणुर्थे राराधक्रमयैस्तुथा ॥ ९ ॥
यत्तेर्ध्वांतुसमायामं द्वाराद्धामन्दिरोत्थितात् ।
तन्मानेनतुपीठस्य दैर्घ्यमर्धेनविस्तृतिः ॥ २५० ॥
द्वारोच्चांच त्रिरन्तानि एकपूर्णाणि वै पुरा ।
सत्यज्य द्वादशांशा द्वे अधः पीठोन्नति स्त्रिभिः ॥ १ ॥
शेषेणाद्यांशसधेन प्रतिमा चोत्थिता भवेत् ।
अथवा वाहनारूढा न्यूना वा मध्यमोत्तमा ॥ २ ॥
चतुर्भि द्वादशांशै स्तदुपविष्टस्य चोन्नतिः ।
विहिता चास्य सर्वत्र प्रतिमार्धेन विस्तृतिः ॥ ३ ॥

तत्त्र्यंशपरिलुप्ताच्च चतुर्थांशोज्झितथवा ।
परिवारवशेनैव चातुरात्म्यस्यवैपुनः ॥ ४ ॥
अलुप्तांशंचविदितं पीठायामंचसर्वदिक् ।
चतुर्दिक्स्थगतस्यैव मेकदिग्स्थगतस्यच ॥ ५ ॥
तदेवदैर्घ्यंद्विगुणं लांछनैरावृतस्यच ।
सार्द्धंचानावृतस्यैव तद्वाहुल्यंपुरोदितम् ॥ ६ ॥
एकैकंलक्ष्मभेदेन तत्संख्यंविद्धिवैपुनः ।
अनन्तासनमाद्यंच द्वितीयंपक्षमन्दिरम् ॥ ७ ॥
कमलांकं तृतीयन्तु चतुर्थं चक्रभूषणम् ।
एवंहिसर्वसामान्यं पीठानांहिद्विरष्टकम् ॥ ८ ॥
भेदभिन्नं समासेन पुनरेवनिबोधतु ।
दिक्षुलक्ष्माणिपीठानां विद्धिकण्ठगतानिच ॥ ९ ॥
अन्योन्यसन्निवेशाच्च तेषां वह्वात्मनांपुनः ।
चक्रांबुजाभ्यां तास्थाभ्यां लुप्ताभ्या मपितत्क्षितेः ॥ २५० ॥
ताभ्यामन्योन्ययोगाच्च दिक्वनन्त खगाश्रयात् ।
द्विद्वयात्मनाद्व्यात्मनावा वहुत्वमवधारय ॥ १ ॥
पद्मेनोर्ध्वगतेनैव द्वयं चक्रेण तद्वहिः ।
एवं ह्यधोगतेनैव परिज्ञेयं द्वयं द्वयम् ॥ २ ॥
उपरिष्टात्तु पद्माभ्या मधश्चक्रं द्वयं द्वयम् ।
द्वितयस्यास्ययाचान्य त्परिज्ञेयम्महामते ॥ ३ ॥
अन्तर्बहिस्स्थितिवशा च्चक्र पद्म द्वयस्यच ।
व्यत्यया दनयो विद्धि ऊर्ध्वभागाच्चतुष्टयम् ॥ ४ ॥
अधोभागा देवमेध चतुष्कमपरन्तुवै ।
पीठाना मष्टक मिद मधस्ता दूर्ध्वत स्तु वा ॥ ५ ॥
युक्तमेकेनवैकुर्या चक्रेण कमलेन वा ।
चक्राकारास्तु विदिता ह्येकभ्रम समाश्रिता. ॥ ६ ॥

बद्दोहि दळास्तद्व दीर्घद्वैकर्णिकान्विताः ।
इतिळांछन संचारो बहुधाते मयोदितः ॥ ७ ॥
यस्मिन् प्रकृति भूतेतु पीठे तदधुना शृणु ।
कृत्वा द्विदंशधा पीठं पुरा यामा स्तमैः पदैः ॥ ८ ॥
एकेन चरणं जंघा कलशो च त्रिभि स्त्रिभिः ।
कण्ठ [ णं ] षीधिमथैकेन षड्भिः कण्ठं [ णं ] तदूर्ध्वतः ॥ ९ ॥
भागेन कण्ठ [णं ] सूत्रन्तु शुक्तिकांशत्रयेण तु ।
उष्णीषं च तदूर्ध्वेतु कुर्या दंशद्वयेन वै ॥ २६० ॥
निर्गमःस्वदळेनैव विहितश्च रणस्य च ।
चतुर्दिक्षु महावुद्धे क्षेत्रतोभ्यधिकःस्मृतः ॥ १ ॥
सर्ववृत्तं घट कुर्यात् पल्लवै र्वारकै र्युतम् ।
परितोंशद्वयेनैव कर्ण [ ण्ठ ] पीठं प्रवेशयेत ॥ २ ॥
अन्तःप्रवेश मेकेन विष्पंशेन गळस्य च ।
कुर्या द्गळप्रवेशस्य समां सूत्रस्य निस्सृतिम् ॥ ३ ॥
शुक्ते रधःक [णं ] ण्ठ सूत्रभागा त्पादेन निर्गतम् ।
वदनान्तं समासेन शुक्ते स्संकोच माचरेत् ॥ ४ ॥
उष्णीषघटजंघाना मश्रिसाम्यं यथास्थितम् ।
घटवद्भूषये च्छुक्तिमरकै र्वाब्जपल्लवैः ॥ ५ ॥
तत्रोपरिष्टा त्परिधि चतुरंशकसम्मितम् ।
सन्यज्य निखनेत् द्रोणी मंशनिम्नां समन्ततः ॥ ६ ॥
विस्तृते मध्यभागेच स्वत्रयंशेनतु निर्गमम् ।
तन्मानं चतुरश्रन्तु पीठसेन्ना द्विनिर्गतम् ॥ ७ ॥
तच्चाग्रत स्त्रिधा कृत्वा पक्षभागो क्षय दयेत ।
अनुपादेन चामूलात् सम्यक् छांगलषस्त्रवत् ॥ ८ ॥
अग्रतो मूलदेशाच्च कृत्वादौ ये त्रिधा त्रिधा ।
भूय स्तत्त्रितने न्मध्या जलं याति यथाद्रुतम् ॥ ९ ॥

सूकराननतुल्यन्तु भवायेव म्महामते ।
कुर्यां द्वे शंखसदृश म्मकरास्योपमन्तु वा ॥ २७० ॥
जलनिर्गम मेतद्वै पीठे पूर्वितलक्षणम् ।
न कुर्या त्कर्मबिम्बाना मशमादिमितात्मनाम् ॥ १ ॥
चित्रमृत्काष्ठजानां तु चपलानां विशेषतः ।
समणालं भवे त्पीठ मासनं च प्रणालकम् ॥ २ ॥
भूरि नीरादिना स्नानं यत्र यच्छति साधकः ।
प्रत्यहं वह्निना तत्र प्रत्यवायो भवे त्स्फुटम् ॥ ३ ॥
एवमेव पृहद्विम्बभूषितानां विधीयते ।
धातुशैलोत्थितानां च निमित्तस्नपनार्थतः ॥ ४ ॥
भद्रासनगते कर्मबिम्बे तस्य समाचरेत ।
सततं च यथालाभं दधिक्षीरघृतादिना ॥ ५ ॥
तोयेन तन्नये यत्नात् भूभागं वा प्रतिग्रहम् ।
यथा नाक्रम्यते पादै र्जन्तुभि स्तन्महर्धिदम् ॥ ६ ॥
अतः प्रणालं विहितं निषिद्ध मत एव हि ।
तत्संस्थापनकालेतु देवानां दिग्विधेहि तम् ॥ ७ ॥
प्राक्प्रत्यगाननानां च तदुदक् दिग्गतं शुभम् ।
उदक्दक्षिणवक्त्राणां प्राग्भागे विहितं सदा ॥ ८ ॥
तापुन भद्रपीठीय देवा द्वामेर्थसिद्धिकृत ।
सदैवाराधकानान्तु विलोमा द्विपरीतदम् ॥ ९ ॥
पीठवच्च परिज्ञेयं प्रासादस्य स उच्यते ।
शुभे दिनेनुकूले च नक्षत्रे पूजिते ग्रहे ॥ २८० ॥
लग्ने स्थिरे स्थिरांशे च स्वशुद्धे चोत्तरायणे ।
दिव्या धापातसंशुद्धे सितपक्षे मलेम्बरे ॥ १ ॥
आजलान्तं कृते खाते पूर्ववत्सम्प्रपूरिते ।
विमुक्तदोषे भूभागे सर्वलक्षणलक्षिते ॥ २ ॥

पूरणा दशशेषेतु सुपलिप्ते धरातले ।
चतुर्थपदिपदे भूते मांग्वसूत्रेण सर्वदिक् ॥ ३ ॥
स्नात शुक्लाम्बर स्स्रग्वी कृतन्यास स्सुशान्तधीः ।
सर्वसाधनसंयुक्तं श्चार्घ्यपात्रसमन्वितः ॥ ४ ॥
मङ्गलपकुम्भ मादाय ध्यायमानोच्युतं हृदि ।
सहचैकायने विप्रै स्संदागमपरायणैः ॥ ५ ॥
तथा ऋङ्मयपूर्वैस्तु आमूलाद्वेगयन्मयैः ।
धिक्षो-प्रासादभूभागे मध्ये कुम्भ निधाय तम् ॥ ६ ॥
कुर्या न्निरीक्षणं भूमि स्ताडनं प्रोक्षणं ततः ।
सेचनं पंचगव्येन सह चाक्षोदकेनतु ॥ ७ ॥
ॐकाराद्यं पविद्यान्तं मन्त्राणां प्राक्चतुष्टयम् ।
पाठयेच्च संपुण्याहं ब्राह्मणान् कृतमण्डनान् ॥ ८ ॥
बहवृचाचीत्रं ( नं शाकुनं ) मा सूक्तं तंतो भद्रं यजुर्मयान् ।
इंडामपेति सामंशो श्रुकान्तायो रित्यथर्वणान् ॥ ९ ॥
ईशकोणा त्समारभ्य प्रागादौ प्रतिपङ्क्तिषु ।
द्वादशाक्षरमन्त्रेण स्वतरम्नेतु पदे पदे ॥ २९० ॥
नतिप्रणवगर्भेण दैवतं देहलक्षणम् ।
यष्टव्यो वौस्तुपुरुषो दधिसक्तचन्दनादिना ॥ १ ॥
सात्विकेनोपहारेण अम्रो सन्तर्पय ततः ।
कुर्या त्कुम्भप्रतिष्ठानं यथा तदवधारय ॥ २ ॥
पूर्ववत्तोरणाद्यैस्तु भूभाग मुपशोभयेद् ।
कर्णिका ( निर्णिक्ता ) छयवक्त्रस्य अभत स्तत्क्षिते पंहिः ॥ ३॥
सर्वोपकरणोपेतं कुर्या न्मण्टप ( ल ) मुत्तमम् ।
कुण्डाष्टकान्तरस्थं च स्थलं तत्राष्टहस्तकम् ॥ ४ ॥
सा गेण्डिका द्विहस्तास्तु कुण्टाः पूर्वोक्तलक्षणाः ।
त्रिहस्ता [ स्त ] पार्चि[ रि ]ता वीथी स्याद्वेवं द्विनय श्शमः ॥५॥

पूर्ववत्प्रतिकुण्डेतु विनिवेश्यं च साधनम् ।
आमन श्रोत्तरे कुर्यात् कुण्डं चाथ समस्थले ॥ ६ ॥
दक्षिणे पूर्ववद्देव मवतार्य मखे क्रमात् ।
स्थलायां स्थण्डिलस्योर्ध्वे उन्नतायां च पूर्ववत् ॥ ७ ॥
तर्पयित्वा यथाकाम मुद्धृत्याग्निगणं ततः ।
दिक्कुण्डेषु विनिक्षिप्य संस्कृतेषु च पूर्ववत् ॥ ८ ॥
तथैवच विदिक्स्थेषु उद्धृत्याभ्यर्च्य वै क्रमात् ।
तत्प्रभवयोगेन चतुर्दिक्षु निवेशयेत् ॥ ९ ॥
चतुरो वासुदेवादीन् नाम्नाएकायनान् द्विजान् ।
स्वाभिःस्वाभिरसंख्यन्तु तैः कार्यमभिधायच ॥ १०० ॥
कर्मावसानंहवनं साज्यैस्तुतिलतण्डुलैः ।
एषमप्ययोगेन वाय्वादीशानगोचरम् ॥ १ ॥
ऋग्वेदाद्यांस्तु चतुर स्संस्कृत्यादौ तथान्यसेत् ।
तैरप्यच्युत लिंगैस्तु स्वशाखोक्तै श्पावनैः ॥ २ ॥
हवनंविधिवत्कार्यं भक्तियुक्तेनचेतसा ।
अथेशकोणमासाद्य ब्राह्मणैरपरैस्सह ॥ ३ ॥
प्राक्प्रनिर्दिष्टन्यसेत्तत्र स्नानोपकरणन्तुयत् ।
दशार्द्धगव्यपूर्वन्तु कलशेषु पृथक् पृथक् ॥ ४ ॥
तानर्चार्घ्यादिनापश्चात् द्विषट्केनाभिमन्त्र्यच ।
समानीयशिलोपेतान् कलशान् पूर्वसम्भृतान् ॥ ५ ॥
उत्कृष्टधातुसम्भूतान् नवशैलमयांस्तुवा ।
समान् सपक्वान् सुघनान् न्मृण्मयांस्तदभावतः ॥ ६ ॥
द्वादशांगुलविस्तीर्णा स्तन्मानेनतुचोन्नतान् ।
द्विगुणान् क्षतिसामर्थ्ये नृपाणां हेमजान् हितान् ॥ ७ ॥
तत्तुल्यं चतुरश्रन्तु द्वादशांगुलविस्तृतम् ।
तत्त्र्यंशतुल्यंबाहुल्यात् शिलाबृन्दं समाहरेत् ॥ ८ ॥

संस्थाप्यविधिवत्कुम्भान् पूर्वोक्तेनक्रमेणतु ।
कम्बुतुल्यमथैकंवा साकण्ठं ष्यंगुलोन्नतम् ॥ ९ ॥
तद्गुणैरपिविस्तीर्णं तत्पातोष्टांगुलस्स्मृतः ।
परितःकर्णवजन्तु शंखोवासुखितोमहान् ॥ ३१० ॥
विहितोहतनासन्तु अन्वश्शुद्धस्तुसाक्षतः ।
एवंहिसान्तराद्वाह्या स्समालभ्याधिवास्यच ॥ १ ॥
फलैर्हेमादिकैरत्नै स्सर्वौषधिमयैस्ततः ।
गन्धैर्बीजैस्तथाधान्यै विद्रुमाद्यैस्तुमौक्तिकैः ॥ २ ॥
नेत्रपत्रैरलंकारै र्भूषयेत्त स्रग्वरैश्शुभैः ।
द्वादशाक्षरमन्त्रेण एकैकस्यसमाचरेत् ॥ ३ ॥
मूर्तिसंसिद्धयेन्यासं प्रणवैस्तच्चिदात्मना ।
ततश्चार्घ्यादिकैर्भोगै र्बल्यन्तैर्विविधैर्यजेत् ॥ ४ ॥
शिलास्वयं कृतेःपश्चा न्निनयेत्कुण्डसन्निधिम् ।
साशिळकुम्भधृन्दन्तु आधारेषूपरिन्यसेत् ॥ ५ ॥
सदाधारशिलांपश्चात तन्नवामण्टपाद्वहिः ।
एवमेवचसंस्कृत्य भावयेत्प्रणवेनतु ॥ ६ ॥
ज्वलन्तींगोसहस्रेण खचितांसूर्यबिम्बवत ।
तत आराध्यमन्त्रन्तु सन्तर्प्य शतसंख्यया ॥ ७ ॥
मध्ये तत्कलशं न्यस्य सांगं सपरिवारकम् ।
निश्शेषशक्तिगर्भन्तु व्यापकं ब्रह्मतत्ववित ॥ ८ ॥
अत ऊर्ध्वं तिर्यगाभि र्वागाद्याभिश्च शक्तिभिः ।
व्रतमूर्तिसमेताभि रभिन्नाभिस्तु तत्वतः ॥ ९ ॥
पाठयेद्ब्राह्मणां स्तत्र आत्मन्यूहन्तु मन्त्रराट् ।
तथैवात्मानुवादं च प्रणवाद्यन्तगन्तु वै ॥ ३२० ॥
तमर्चयित्वा विधिव त्तर्पयित्वा त्वनन्तरम् ।
दिक्स्थितानां च कुम्भानां वासुदेवादिकान्नचयेत् ॥ १ ॥

पूर्ववच्चानिरुद्धाद्यान् विदिक्संस्थापितेषु च ।
पाठये च्चातुरात्मीयं संज्ञामन्त्रचतुष्टयम् ॥ २ ॥
प्रभवाप्ययययोगेन तत स्सूक्तन्तु पौरुषम् ।
ऋग्वेदान् पाठये द्भक्त्या युंजते स्यपरान्यजुः ॥ ३ ॥
रथन्तराख्यं यत्साम साममन्त्रान् भगवन्मयान् ।
सहस्रशिरसं चेति मन्त्रां श्चाथर्वणां स्ततः ॥ ४ ॥
एकस्मि न्वा महाकुंभे सर्वोक्तं कलशे हितम् ।
तथैव हवनं कुण्डे मध्यमे विहितं स्वयम् ॥ ५ ॥
किन्तु क्रमेण वै मन्त्रान् पाठयेच्च यथास्थितान् ।
एवं सम्पातहोमन्तु कृत्वा पूर्णान्तिकं ततः ॥ ६ ॥
महाशक्तिसमूहस्तु पर स्सामर्थ्यलक्षणः ।
अभेदेन च मन्त्रादिमूर्तीनां य स्स्थित स्स्फुटम् ॥ ७ ॥
स सन्धेय श्शिलानां च स्वनाम्ना प्रणवेनतु ।
ज्ञानभासा निवसति तथानन्तबला प्रभा ॥ ८ ॥
सर्वगा ब्रह्मवदना द्योतकी सत्यविक्रमा ।
सम्पूर्णा चेति कथिता श्शक्तयो विश्वधारिकाः ॥ ९ ॥
या शिला कलशाधारसंज्ञाता विद्धि सर्वगाम् ।
सामर्थ्यशक्तिसामान्यां निष्कलां पारमेश्वरीम् ॥ ३३० ॥
सन्तर्प्य मूलमन्त्राद्य शिखामन्त्रेण लांगलिन् ।
अजस्य नाभावध्येक मन्त्रेणैकायनै स्ततः ॥ १ ॥
तादर्थ्येनतु होतव्यं मृद्मयैस्तु तथैव हि ।
होतव्य मस्य वाग्मीयं गायत्रीभि स्ततो परैः ॥ २ ॥
होतव्यं ब्राह्मणै स्सम्य क्तद्द्वयासे रुपलक्षकैः ।
दत्वा पूर्णां स्वयं कृत्वा स्थलस्यस्यार्चनं पुनः ॥ ३ ॥
बलिदानश्च भूतानां समाचम्य ततो व्रजेत् ।
प्रासादब्रह्मभूभागं न्यसे त्तत्र महाशिलाम् ॥ ४ ॥

संस्मरं स्वक्रमन्त्रन्तु सानन्तं प्रणवेन वै ।
बीजभूतं तदन्तस्स्थ मध्वपट्कं स्मरन्पजेत् ॥ ५ ॥
निश्शेषमन्त्रवृन्देन होमस्याद्ये रनन्तरम् ।
द्वारंदिग्वीक्षमाणन्तु मध्ये मन्त्रघटं न्यसेत् ॥ ६ ॥
स्वदिक्ष्वन्यान्यथावस्थान् स्वे स्वे मंन्त्रे निवेशयेत् ।
तत स्स्वशक्तिपाषाणे रेकैकं स्थगयेत घटम् ॥ ७ ॥
पूरये दस्त्रमन्त्रेण घटाना मन्तरं ततः ।
मृदु मृद्वालुकाभिस्तु सुधयाचळसिद्धये ॥ ८ ॥
संवेष्टच नेत्रवस्त्रैस्तु ऋग्वेदान् पाठये ततः ।
क्षात्याहार्येति सूक्तन्तु प्रतिष्ठा सामसामगान् ॥ ९ ॥
द्वादशाक्षरसंयुक्तं बलमन्त्रं पुनः पुनः ।
वक्तव्यं ब्रह्मनिष्ठैस्तु प्रणवान्तं सुभाविते: ॥ ३४० ॥
तदेकतनुतां यातं संस्मरे त्प्रणवेनतु ।
मूर्त्या दिशन्ति निष्टं यन्नामरूपक्रियात्मकम् ॥ १ ॥
द्वादशाक्षरमन्त्रेण भूय स्स्वहृदयंगमैः ।
तदाराध्यं समूर्तिन्तु संयजे त्तेजसां निधिम् ॥ २ ॥
तत्र सर्वो भगवन् भोगैः पाठये त्पांचरात्रिकान् ।
अर्चामि तेति ऋग्वेदा नर्चा सामच तद्विदः ॥ ३ ॥
ततः परिस्थितेतु क्षेत्रे देवगृहात्मके ।
द्वादशांगुलमानन्तु दिग्विदिक्ष्वष्टकं न्यसेत् ॥ ४ ॥
स्थापितं पूजितं सम्य क्शिलाना शुभलक्षणम् ।
तदन्त स्सन्निरोद्धव्या बुद्धिधर्मगुणाः क्रमात् ॥ ५ ॥
धर्माद्या श्चाग्निकोणास्तु याव दीशपदं पुनः ।
प्रागादा वुत्तरान्तं च अधर्माद्यं चतुष्टयम् ॥ ६ ॥
शिलाना मन्तरे भूमौ षट्कं षट्कं क्रमेण तु ।
न्यस्तव्यं पूर्ववर्णाच्च वर्णानां सावधानकम् ॥ ७ ॥

शब्दब्रह्मानुविद्धां च कृत्वैवं बुद्धिवागुराम् ।
सूत्रभूतां न्यसेत् सम्य क्प्रासादतलसंस्थिताम् ॥ ८ ॥
न्यसे त्प्राङ्गणभित्त्यर्धे तथैव हि शिलाष्टकम् ।
तासु संरोधये त्सम्य क्प्रागुक्तां स्तु दिगीश्वरान् ॥ ९ ॥
चक्रं सदन्तभूमीनां भ्रमद्वह्निस्फुलिंगवत् ।
क्षणेन चिन्तये द्व्याप्तं भूभागं चांगणीयकम् ॥ ३५० ॥
आभोगं वद्ध्य शेषं तदूर्ध्वं गगनेश्वरम् ।
वहिः प्राकणभित्तीनां साङ्गं सपरिवारकम् ॥ १ ॥
प्रागादा वीशकोणान्त मिन्द्राद्यं चाष्टकं न्यसेत् ।
तथाविधेषूपलेषु अन्तर्भूमिगतेषु च ॥ २ ॥
तारस्वनाम्नार्चयित्वातु ऋग्वेदान् पाठये ततः ।
द्वारे न विद्यनिष्ठे वै ये देवास्तु यजुर्मयान् ॥ ३ ॥
देयतरं च सामद्यान् प्रविश्याभ्यन्तरं ततः ।
स्थित्वाग्रतो मन्त्रमूर्तेः स्थास्यामि मनुस्मरेत् ॥ ४ ॥
बीजस्य श्चांकुरीभूता पुरस्ता द्व्यक्ति मेति सा ।
प्रासादपीठपर्यन्तं कुम्भाधारोपलात्तु वै ॥ ५ ॥
भुवनाध्वा यथावस्थो भावनीयः पुरोदितः ।
गर्भोच्छ्रायावधि यावत् पादाध्वानं विलोकयेत् ॥ ६ ॥
मन्त्राध्वा शुकनासान्त स्तत्वाध्वावेदिकावधिः ।
कलाध्वाण्डगंजा [ गुगला ] न्तश्च वर्णाध्वाच तदूर्ध्वतः ॥ ७ ॥
समीकृत्य पुरा सर्वं प्रासादं प्रारभे ततः ।
वलादूनाधिकाश्चैव सांगुलै रचितैः करैः ॥ ८ ॥
द्विर्द्वादशकरः याव त्तालेनोनाधिकेन तु ।
शुभाय सिद्धये विद्धि गर्भं देवगृहस्य च ॥ ९ ॥
कृत्वा क्षेत्रांगुलानां च कराणां या घनं पुरा ।
त्यजे तदष्टभि स्सम्य ग्यच्छेषं तद्विचार्य च ॥ ३६० ॥

एकाधष्टमपर्यन्ता ध्वजधूमसृगेश्वराः ।
श्वाच गोखरमातंग वायसा स्तु तत्र शुभाः ॥ १ ॥
एकत्रिपंचसप्ताख्या स्सर्वत्रैव विधीयते ।
गर्भपड्भाग मानेन तद्वादि भित्तिविस्तृतिः ॥ २ ॥
तन्मानं परित स्सयस्त्वा भित्ति रन्या विधीयते ।
एवमन्नक्रमेणैव सहभित्तिगणेनतु ॥ ३ ॥
गर्भाद्विगुणविस्तीर्णं क्षेत्रंदेवगृहस्यच ।
मन्दिरेत्वेकभित्तीये क्षेत्रमानंविधीयते ॥ ४ ॥
गर्भोत्सतंत्रिभागेन युक्तंयुक्तेन वर्त्मना ।
हस्तादिह्रासवृद्ध्यातु आयवृद्धिंविचारयेत् ॥ ५ ॥
एवनिर्गतीकंच भागपीठंविवर्जितम् ।
आद्यादक्षेत्रमानच तद्युक्तमवधारय ॥ ६ ॥
षड्भागेनाधपादेन त्रिभागेनोभयात्मिका ।
विहिताजगतीभाग स्तत्क्रियाविस्तृतिर्भवेत् ॥ ७ ॥
अधिकार्द्धंचतुर्दिक्षु तत्पंचांशैस्तुवेदिभिः ।
तृतीयांशेनवैमध्ये निर्गमस्तुविधीयते ॥ ८ ॥
कोणात्कोणात्तुवेशेषं भागंभागंप्रवेशयेत ।
उच्चंगर्भसमंपीठं तत्पीठेनदळेनवा ॥ ९ ॥
पीठोन्ताळयपीठस्य ळक्ष्मस्थित्यंशकल्पना ।
चतुर्दिक्षुविधेयावै यद्युधानन्तपूर्विका ॥ ३७० ॥
अथोच्छ्रयन्तुवैक्षेत्रा त्रिगुणंमन्दिरस्यच ।
कुर्याद्व्यर्धगुणंचैव द्विगुणंवायथेच्छया ॥ १ ॥
द्विरेकादशधाकुर्या त्पंचभागैस्समम्पुरा ।
विधेयंपीठवत्पश्चा देकांशेनमसूरकम् ॥ २ ॥
तदूर्ध्वनिहिताजंघा गर्भमानेनचोन्नता ।
भवोपकरणीयाभि र्देवताभिरलंकृता ॥ ३ ॥

जंघापामंशयुग्मेन उपयूनाधिकेनच ।
कार्यंशिखरपीठन्तु पूर्वलक्षणलक्षितम् ॥ ४ ॥
किन्तु प्रवेश निर्यासौ तत्रचार्धांशसम्मितौ ।
शिखरचारविहितं भूमिकानवकान्वितम् ॥ ५ ॥
सकोच्यतत्पुरास्तु मादायोत्रतिसम्मितम् ।
एकस्मादेकवर्णात्तु जयोर्ध्वायात् प्रसार्यच ॥ ६ ॥
संस्पृशेत् शिखरपीठ मलसातं निरोध्यच ।
प्रासादाद्बहिरायत्र भूभागोत्पमलेक्षण ॥ ७ ॥
कर्णादूर्ध्वं नयेत्सूत्र लाछपणान क्रमणतु ।
शिखरोन्नतिपर्यन्त चतुर्दिक्ष्वेवमेवाहि ॥ ८ ॥
पर्यटेल्लाछमानन्तु कर्णार्ः र्णं महामते ।
यावद कुमुदपत्राभा ह्यास्याच्छिखरमंजरी ॥ ९ ॥
एवमालेख्यदृष्टचातु तम्पाद्यावन्तु नातत ।
भूमिकाण्डमविज्ञ्यर्थ कार्याकादशधापुनः ॥ १८० ॥
उपरिष्टात्तुभागेन भवदामलसारकम् ।
भूमयोभागमानास्तु ततस्ताश्चासमाचरेत् ॥ १ ॥
क्षयवृद्ध्याविधानन्तु त्यक्त्वास्थानंचभूमिकाम् ।
चतुस्त्रिद्व्येकसख्यानि सममानांगुलानिच ॥ २ ॥
निजभूमेस्समारभ्य तानियोज्यान्यधः क्रमात् ।
पूर्वभूमेस्समारभ्य ह्यवस्थेभूमिकागणे ॥ ३ ॥
सर्वासांव्यवधानन्तु बहिरष्टांशसम्मितम् ।
विभिन्नापीठरचना तासुकार्यायथास्थिता ॥ ४ ॥
सचक्रैर्विविधै पद्मै प्रादुर्भावैस्तुचाखिलैः ।
सर्वैर्वालाललनैर्मूर्तै नृत्तगीतरसास्थितैः ॥ ५ ॥
नवांशेनोर्ध्वभागात्तु स्वपादेनविनिर्गतम् ।
उष्णीषमूर्धभूमेस्तु कार्यं वै रचनोज्झितम् ॥ ६ ॥

शिष्टं कृत्वा त्रिधा पीठं मण्डलस्थेन पूर्ववत् ।
द्वितीयेन ततः कण्ठं तृतीयेनोर्ध्वगेनतु ॥ ७ ॥
सुसमं श्रीयुतं कुर्या दण्डं धात्री फलाण्डवत् ।
नवधोष्णीषकं कृत्वा चतुर्भि र्वेदिकाभ्रमम् ॥ ८ ॥
त्रिभागपृथुलं कण्ठ मण्डं पंचांगसम्मितम् ।
पंचधा सप्तधा कृत्वा गर्भं वा नवधा पुरा ॥ ९ ॥
विहाय पक्षगौ भागौ मध्यभागगणेनतु ।
प्रासादनाडिका कार्या गर्भार्धेन विनिर्गता ॥ ३९० ॥
पादेन वा त्रिभागेन सस्तम्भाप्यथ केवला ।
उन्नता शिखरार्धेन स्याप्युत्पलदलोपमा ॥ १ ॥
कार्या शिखरपीठोर्ध्वे दिव्यकर्मविभूषिता ।
तत श्शुभतरं कुर्या न्मण्टपं स्तम्भसंयुतम् ॥ २ ॥
भूषितं विहगेन्द्रेण बलिमण्डलगेन च ।
चतुर्द्वारे तथा दिक्षु विधेयं मण्टपत्रयम् ॥ ३ ॥
प्रवेशत्रितयोपेतं मण्टपे मण्टपं भवेत् ।
कुर्या न्मण्टप मुक्तं वा यथाभिमतनिर्गमम् ॥ ४ ॥
रथोपरथकायन्तु तेषां गर्भा द्विधीयते ।
निर्यासो दशमांशेन द्वादशांशेन लांगलिन् ॥ ५ ॥
अथवा षोडशांशेन ते कार्या नेमिवत्पुनः ।
चतुर्दिक्पक्षसंश्लिष्टाः पीठकर्मविभूषिताः ॥ ६ ॥
शिखरस्य चतुर्दिक्षु पीठोपरि समापयेत ।
सम रथकयुक्तयातु नासिकामंजरीगणम् ॥ ७ ॥
मध्यदेशाच्चतुर्दिक्षु कुर्याद्वारगणं समम् ।
त्रिचतुःपंचषट् भागे ततो गर्भा द्विधीयते ॥ ८ ॥
द्विगुणं चोन्नतत्वेन त्रिपञ्चनवशाखिकम् ।
युक्त द्वास्थद्वयेनैव कुम्भभद्रशनैस्तु वा ॥ ९ ॥

विधिवत्स्थापनं तस्य मन्त्रपूर्वं समाचरेत् ।
संस्नाप्य मूलमन्त्रेण सम्पूज्याघ्र्यादिना हृदा ॥ ४०० ॥
शालामूलगतां कुर्या द्धातुरत्नमयीं स्थितिम् ।
सर्वधारामयं मन्त्रं सन्निरोध्याहि तत्र च ॥ १ ॥
ज्ञानक्रियात्मकं ध्यात्वा शिखामन्त्रेण शाश्वतम् ।
दक्षिणोत्तरभागाभ्यां शालायुग्मन्तु विन्यसेत् ॥ २ ॥
हृन्मन्त्रेण तदूर्ध्वंतु रूप्यार्थं परमेश्वरम् ।
सन्निधीकृत्य सम्पूज्य गगनस्थे त्वुडुम्बरे ॥ ३ ॥
द्विविधं धातुजालन्तु रत्नं सिद्धार्थकां स्तिलान् ।
चन्दनाद्याद्दिगन्धा ये क्षीरं दधिघृतं मधु ॥ ४ ॥
शालय सर्वबीजानि सर्वौषध्य स्सविग्रुमाः ।
कृत्वा नेत्रेण नेत्रस्थान् द्वारोर्ध्वे विनिवेश्य तान् ॥ ५ ॥
इदं भोगाप्तये चैव त्विदंत्वं मोक्षसिद्धये ।
चतुष्पा त्सकलौ धर्म स्तत्रोर्ध्वे सन्निरोध्य च ॥ ६ ॥
चाथारिश्रृंगाहति मत्पाठये हृद्गमर्भा स्ततः ।
कर्महोमचयं कृत्वा पूर्णां मूलेन पातयेत् ॥ ७ ॥
एतद्बिम्बप्रतिष्ठानात् प्राग्व त्पश्चा त्समाचरेत् ।
विद्धच [ स्थाप ] पेक्षावशेनैव ह्यालयस्यतुवैविभोः ॥ ८ ॥
अनन्तभुवनंनाम सर्वकामापवर्गदम् ।
चतुष्प्रकारमेवंहि प्रासादंविद्धिपीठवत् ॥ ९ ॥
रचनासन्निवेशोत्थ भेदेनानेकधातथा ।
पतत्रीशमृगेन्द्रैस्तु निधिभूतोपमैर्घटैः ॥ ४१० ॥
शंखपद्मांकिताभिस्तु सोपानपदपङ्क्तिभिः ।
युक्तंद्वारवशेनैव तथापीठवशात्तुवै ॥ १ ॥
विस्तारःप्रतिदिक्संस्थ स्त्वहणस्य विधीयते ।
गर्भोत्थक्षेत्रसंज्ञाच जगतीकस्यद्वांगलिन् ॥ २ ॥

द्वीपस्सजगतीकस्य तन्मानेनापिसर्वदिक् ।
एभ्यःपादादिकंकुर्यात् पादांशोऽस्त्वित्तुवै ॥ ३ ॥
मुख्यायतनानांच संस्थितश्चांगने [ कणे ] पुरा ।
चतुरायतनंविद्धि प्रासादैःदिक्त्रयस्थितैः ॥ ४ ॥
आग्नेयादकोणस्थै स्तत्पंचायतनंस्मृतम् ।
विद्धियमष्टायतनं विनिरन्यैस्तुदिग्गतैः ॥ ५ ॥
विनामध्यस्थितेनैव दिग्गतैस्तु द्विभिर्द्विभिः ।
तद्दशायतनन्तेन युक्तमेकाधिकं भवेत् ॥ ६ ॥
प्रतोलीपक्षगेनैव प्रासादद्वितयेनतु ।
द्वादशायतनंविद्धि सहमध्यस्थितेनतु ॥ ७ ॥
तदेवाधिकसंख्यन्तु अतोन्योन्यसंज्ञिकः ।
परस्परमुखौकुर्या त्प्रासादौद्वारदेशगौ ॥ ८ ॥
प्रासादाभिमुखाश्चैव दिक्त्रयेवस्थितास्तुये ।
कोणस्थाभ्यांचसाम्मुख्यं द्वाभ्यांद्वाभ्यां विधीयते ॥ ९ ॥
द्वाभ्यामभिमताभ्यांतु कुर्यादुचितदिङ्मुखम् ।
द्वौपरस्परवक्त्रौतु कोणदेशछमाश्रितौ ॥ ४२० ॥
द्वाराण्यनन्तायतने प्रासादानांमहामते ।
यथाभिमतदिक्स्थानि कर्तव्यान्यविशंकया ॥ १ ॥
नतत्रदेपांभवति वेधदोषःपरस्परम् ।
अंगभावगतत्वाच्च प्रधानायतनस्यवै ॥ २ ॥
अर्धेन च त्रिभागेन हितःपादेनचांगणात् ।
परण्डकस्यचोच्छ्राय स्तद्विस्तार स्तथोच्छ्रितेः ॥ ३ ॥
सत्वपीठोपमंकुर्यात् श्लक्ष्णंसोष्णीषमेववा ।
युक्तंकोटिगणेनाथ नानादेवान्तगेनतु ॥ ४ ॥
यदेकायतनंचैव त्वंगनन्तन्महामते ।
युक्तंलघुपरण्डेन केवलंवापरण्डकम् ॥ ५ ॥

यदाद्यायतनाद्यस्य द्वादशायतनान्तिमम् ।
एकदिग्वीक्षमाणंच चतुरश्रायवेंगने ॥ ६ ॥
वृत्तायतेवायितते प्रासादेचोक्तलक्षणे ।
यस्माद्देवालयानांच अंगनानांविशेषतः ॥ ७ ॥
चतुरश्रादिपीठानां नित्यमेवमहामते ।
अन्योन्यानुगतंयन्तु हितंसापेक्षकंन्तुवै ॥ ८ ॥
भूमिभागवशेनैव तथैवार्चावशेनतु ।
नानाफलवशेनापि तथाशोभावशेनच ॥ ९ ॥
भूलाभश्चतुरश्रात्तु चतुरश्रायताद्धनम् ।
वर्तुंळा त्सर्वकामाप्ति निर्वृति स्तु सदायतात् ॥ ४३० ॥
दृष्टादृष्टफलेप्सूनां लोकास्तु महदादयः ।
यच्छन्ति वैष्णवं स्थान मारोग्यं भूति मुत्तमाम् ॥ १ ॥
वैष्णवाना मकामानां च्युते रन्ते परं पदम् ॥ ४३१ ॥

इति श्रीपाञ्चरात्रे श्रीसात्वतसंहितायाम्
प्रतिमाप्रासादलक्षणविधि र्नाम

चतुर्विंशः परिच्छेदः ॥२४॥

---

## अथ पंचविंशः परिच्छेदः ।

---

श्रीनारदः ।

सर्वलोकगुरु विभो यदुक्तो विश्वधारिणा ।
तदिदानीं प्रवक्ष्यामि मन्त्रबिम्बनिवेशनम् ॥ १ ॥
भोगेप्सूनां च वर्णानां साम्प्रतं यदभीष्टदम् ।
कैवल्यदं शमाञ्चैव चातुराश्रम्यसेविनाम् ॥ २ ॥

यद्यधर्मरतानां च सद्यं च फलेस्तु तत ।
प्राग्वदेव॒दुस्याग्रे द्विकलाभे [ ग्भागे ] चाति मण्टपम् ॥ ३ ॥
चतुरश्रं चतुर्द्वारं दर्भमालान्तरीकृतम् ।
अन्यत्र तदलाभेतु यथाभिमतदिङ्मुखम् ॥ ४ ॥
चतुर्दशकराचैव यावांत्रिशत्करावधि ।
षट्करान्तं पुन स्तस्मात् बिम्बमानव्यपेक्षया ॥ ५ ॥
कार्यो मध्ये स्थला तेषां द्विसमांशो स्ततोष्टभिः ।
समन्तभद्रा सुप्रलक्ष्णा चितापक्केष्टकादिकैः ॥ ६ ॥
तालोन्नते स्वगारभ्य सामान्येस्मिन् हि कर्मणि ।
द्वत्रांगुलवृद्धयातु नीचा तद्ध्रासतां क्रमात ॥ ७ ॥
द्वि[त्रि]रष्टकांशकैर्मध्ये सर्वासां मण्टपं [ ण्डलं ] भवेद् ।
चतुरश्रंचतुर्द्वारं चक्रांबुरुहभूषितम् ॥ ८ ॥
दक्षिणेशयनंसौम्ये कुण्डमग्नेस्तु पूर्ववद् ।
समेखलं द्विहस्तन्तु चक्रपद्माकितं शुभम् ॥ ९ ॥
तदथ श्चतुरश्रं प्राग्दाममेखलिकान्वितम् ।
अथ दक्षिणदिग्भागे कुर्यात् द्वे चक्रचिह्नितम् ॥ १० ॥
वर्तुलं पश्चिमे सौम्ये कमलांकं मनोहरम् ।
शंखांकं सर्वकोणेषु मान मेषां यथोर्ध्वगे ॥ ११ ॥
सर्वे दशान्तहस्तानां चतुर्णा मेकमेखलाः ।
मण्टपानान्तु किं त्वत्र ऊर्ध्वगं सर्वमेखलम् ॥ १२ ॥
अतोथ स्वस्थिता स्सर्वे एककुण्डास्तु मण्टपाः ।
तेषां समेखलं चाद्यं द्वाविंशत्यंगुलं भवेत ॥१३ ॥
ह्रासा दंगुलयुग्मस्य याव द्वे षोडशांगुलम् ।
स्यात् षट्करे गृहे कुण्डं कार्या वा मेखलाधिका ॥ १४ ॥
अष्टहस्तोच्छ्रितः पूर्वः अधोर्ध्वकरवर्धिताः ।
न ह्रास ष्षट्करान्तानां न्यूनाना मुच्छ्रिते भवेत ॥ १५ ॥

त्रयोदशकरादीनां चतुर्णां पातये ततः ।
अष्टकं चांगुलानां तु सप्त पंच चतुः क्रमात् ॥ १६ ॥
एवं स्नानगृहाणान्तु विस्तार श्चोन्नते स्सह ।
किन्तु ये वालुकापीठे मध्यत श्चोपशोभिताः ॥ १७ ॥
द्विचतुर्भि र्द्विसप्तां [ हस्तां ] शे विस्तृताः प्राग्वदुन्नताः ।
स्नानीया यागगेहा द्वा दिक्त्रयेऽभिमते शुभम् ॥ १८ ॥
अर्धमानसमं कुर्यात् सुपीठशयनान्वितम् ।
हृद्दानभवनं कुर्या न्मंगल्यकलशै स्सह ॥ १९ ॥
सर्वेषां कर्मभूभागं कोणस्तम्भै र्विभूषितम् ।
सुनेत्रै र्वेष्टितं कुर्या च्चक्राद्यैः पूर्ववद्युतम् ॥ २० ॥
सुस्थिरं दृढपादं च स्नानाम्भो ग्रहणक्षमम् ।
अर्धेन वालुकापीठ दीर्घमाद्यक्रमेण तु ॥२१ ॥
वर्धितं चाग्रहस्तेन ह्रासितं चतुरंगुलैः ।
स्वदैर्घ्या दर्धविस्तीर्ण कृत्वैवं सप्रणाळकम् ॥ २२ ॥
तेन तद्वालुकापीठं भूषये न्मध्यगेनतु ।
यागागारस्य वै दिक्षु द्वारार्ध तत्र चान्तरे ॥ २३ ॥
शमार्धवृत्तियोगेन ह्यतोन्यत्र कळादिकः ।
तोरणानि बहिः कुर्यात दृढैः काष्ठै स्सुपूजितैः ॥ २४ ॥
पंच हस्तानि चार्धेन वर्धितानि करेणतु ।
न ह्रास मात्वरे तेषा मन्यत्र करणे सति ॥ २५ ॥
न[ द ] शमा त्पंच हस्ताना मूते भूमौ प्रवेशयेत् ।
शमार्धं वर्धितानां च द्वे द्वे संवर्धये त्कळे ॥ २६ ॥
दैर्घ्या त्प्रवेशशिष्टात्तु त्रिभागेन तदन्तरम् ।
सर्वे चक्रध्वजाः कार्याः वस्त्रस्रङ्मञ्जरीयुताः ॥ २७ ॥
सुधाद्यै र्वर्णकैः पीतै श्चन्दनाद्यै स्तु लेपिताः ।
भिन्नांग मेत दखिलं यथैकस्मिन् हि युज्यते ॥ २८ ॥

कर्मयागगृहे शश्व द्विभूते वा वने विना ।
पंच त्रिंशत्करं क्षेत्रं स्वतुल्यांशेन विस्तृतम् ॥ २९ ॥
तन्मध्येतु चतुर्हस्तं त्वापाद्यं स्थळसप्तकम् ।
स्थळानां व्यवधानन्तु कुर्या द्वे ताळसम्मितम् ॥ ३० ॥
एकापायेन चै कुर्यात् द्विहस्तान्तं स्थळांगणम् ।
क्रमेणाष्टांगुळा न्मानात् द्व्यंगुळं द्व्यंगुळं विना ॥ ३१ ॥
स्थळानां संकटानां च व्यवधानं द्विगोळकम् ।
एव मेव समुच्छ्राय स्सर्वेषां परिकीर्तितः ॥ ३२ ॥
परितो विहितं वीधे मांत मत्र स्वपीठजम् ।
एवं वासंकटे कुर्या दायोक्ता न्मण्टपद्वयात् ॥ ३३ ॥
मध्ये मण्डळपीठन्तु तस्य दक्षिणदिग्भवेत् ।
समीपे शयनस्थानं कुम्भानां स्थापनायनम् ॥ ३४ ॥
एवं हि वामनिकटे भोगानां मन्त्रतर्पणम् ।
ऋग्यजुस्सामपूर्वाणां श्रुतीनां हवनं परे ॥ ३ ॥
प्राग्धामं शयनस्थाने ह्यन्यस्मिन् शयने हितम् ।
प्रासादस्याष्टदिङ्मूर्ति शक्तिपानां यथोदितम् ॥ ३६ ॥
स्थण्डिले ष्वथ कुण्डेषु तादर्थ्येनाथवा स्वयम् ।
स्वकुण्डे हवनं कुर्याच्चतुर्वेदमये परे ॥ ३७ ॥
समस्तमूर्तिपीयं वा स्वय मेव समाचरेत् ।
सामग्रीविरहा द्योग्य मूर्तिपाना मभावतः ॥ ३८ ॥
यश्च यत्रोपयोज्यस्तु तत्रतं सम्प्रवेशयेत ।
मन्त्राणा मुपदेष्टातु आत्मतुल्यो महामतिः ॥ ३९ ॥
योक्तव्यः कर्मदक्षस्तु सर्वे ष्ववसरेषुच ।
स्वयं वस्तवनुसन्धाय हवनार्चनकर्मणाम् ॥ ४० ॥
आरतेष्वुत्पत्तिपूर्वाणां न्यासान्वाना मनन्यधीः ।
कृत्वा दीक्षाविधानोक्तं सहोमं कलशार्चनम् ॥ ४१ ॥

कुर्या त्सतोरणानां च ध्वजानां स्थापनं ततः ।
सितरक्तादिभेदेन प्रागादौ च ध्वजाष्टकम् ॥ ४२ ॥
निवेश्य मध्यवेद्यान्तु पुन रथ्यपथस्तथा ।
यजे त्सत्यादिकं तत्तच्चतुष्कं ह्येव मेवहि ॥४३॥
तत देवा अवहित सूक्ष्मयान् पाठये ततः ।
ऊर्ध्व सह सुपर्णेन चक्रं तोरणगं यजेत् ॥ ४४ ॥
पाठयेत् द्वारपालीयं सामसामविद स्ततः ।
अथार्घ्यपुष्पहन्मूर्तिधरे र्यायात् समावृतः ॥ ४५ ॥
यत्र तिष्ठति विश्वेशः पीठब्रह्मशिलान्वितः ।
तत्रावलोकनं तेषां कुर्या त्सन्ताडनादिकम् ॥४६॥
चक्रास्त्रमन्त्रिते स्स्नानकलशै स्स्नापये त्ततः ।
सिद्धार्थके स्तथा पंचगव्य मृद्भूतिवारिणा ॥ ४७ ॥
वल्मीक मृज्जलेनाथ चक्रांकौषधिवारिणा ।
संक्षाल्याभ्यर्च्य चोद्वर्त्य क्षाळये द्रत्नवारिणा ॥४८॥
तमर्घ्येणार्चयित्वा च तत स्तन्मन्त्रितान् करे ।
सिद्धार्थकान् दक्षिणेतु बध्वाये पाठये दृचम् ॥ ४९ ॥
रक्षोहणं तथा सर्वा स्त्रये त्प्रतिसरे मणीन् ।
सद्वस्त्रवेष्टितं कृत्वा समारोप्य रथोत्तमे ॥ ५० ॥
कर्मारम्भं चपठत स्तस्य दक्षिणदिङ्न्यसेत् ।
ऋग्सामपूर्वा न्वामेतु ब्राह्मणांस्तु चतु श्चतुः ॥५१॥
पुरतोस्त्रं स्मर न्यायात् स्वयं विप्रांस्तु सूदयन् ।
सनृत्तगेयवादित्र स्तुतिमंगळपाठकैः ॥ ५२ ॥
इदं विष्णु र्विचक्रम ऋङ्मये स्सह पाठयेत ।
एकायनांस्तदन्तेतु ॐ नमो ब्रह्मणेतु यत ॥ ५३ ॥
तथैव शाकुनं सूक्तं श्रीसूक्तेन समन्वितम् ।
स्वर्णादिनाथिन श्शक्त्या तर्पयं स्ता न्प्रवेशयेत ॥ ५४ ॥

स्वस्थानं यज्ञभूमेर्वं प्रासादाद्यन्तरन्तु वा ।
वक्ष्यमाणविधानेन युक्तं रत्नशिलादिना ॥५५॥
कृत्वा द्रव्याधिवासं मा कर्मभूमौ पुरोदितम् ।
स्नानकर्मशिलादीनां मीष स्कृत्वातु सार्चनम् ॥५६ ॥
यथावद्रत्नविन्यासं प्रीतिपूर्वं निवेश्य च ।
गृह द्विम्बं ततः कुर्यात्कर्मबिम्बेखिलन्तु वै ॥५७॥
सन्निरोधस्तु मन्त्राणां तत्र लग्नोदये स्मृतः ।
आगृहात्स्नापनात् सर्वं यत्किञ्चि द्य तत्र तत ॥ ५८ ॥
निर्वर्तनीयं पूर्णान्तं पुर्ववं प्राङ् महामते ।
तथा कार्यं शुभो येन मुहूर्तो नावसीदति ॥ ५९ ॥
एवं हि चित्रपूर्वाणा मन्येषां कमलेक्षण ।
सरत्नब्रह्मपाषाणवर्जितानां समाचरेत् ॥ ६० ॥
स्नानाद्यं कर्मबिम्बेतु तत्समीपेथ दर्पणे ।
कर्मबिम्बंविनान्येषां मस्वापाद्यंद्विविष्टरे ॥ ६१ ॥
कुर्यात्प्रवेशपूर्वंतु सर्वंमुत्सवपश्चिमम् ।
एवंप्रवेश्यतद्बिम्बं सांप्रतं विनिवेश्यच ॥ ६२ ॥
निषण्ण दृढकाष्ठोत्थ तोरणेष्वाहुती स्ततः ।
निवेश्य स्नानकलशान् हेमाद्युत्थांस्तु निर्व्रणान् ॥ ६३ ॥
पूर्ववद्वचनोपेतान् सुसमांस्त्राव वर्जितान् ।
निरीक्षणादि संशुद्धान् कृत्वा सहृदयेनतु ॥६४॥
द्वादशाक्षरमन्त्रेण मन्त्रयेत्तान्सकृत्सकृत् ।
तेनैव पूजयेत्पश्चात् अर्घ्यस्रक्चन्दनादिना ॥ ६५॥
तदाहरणहोमन्तु यथाशक्ति समाचरेत् ।
पूर्णांत मथ सम्पूर्य क्रमाद्द्रव्यं नियोजयेत ॥ ६६ ॥
पाद्या र्घ्याचमनीयार्थं द्रव्यैः पूर्वोदितै स्त्रयन् ।
नागाद्याद्यन्त मध्येभ्यो नदीमृत्तीर्थ सम्भवा ॥ ६७ ॥

हृदाद्वल्मीक शिखरात् गजदन्त क्षतीकृतात् ।
हलोत्था घृषशृंगोत्था शालिक्षेत्रेषु सम्भवा ॥ ६८ ॥
तथैव पद्म षण्डोत्था त्वेकस्मिन् गोमयं परे ।
वनदाहसमुद्भूतं तथैव च महानसात् ॥ ६९ ॥
त्रेताग्नि भस्मावपरे विनिवेश्यं घटान्तरे ।
अन्यस्मि पंचगव्यन्तु कुशोदक समन्वितम् ॥ ७० ॥
सघृतं तैलकुम्भन्तु चमसीघारि पूरितम् ।
पलाश खदिरा श्वत्थ शंमी लोहित चन्दनम् ॥ ७१ ॥
कषायोदक मन्यस्मिन् परस्मि त्रिफलोदकम् ।
वचा शतावरी कन्या व्याघ्री सिंही कृतांजलिः ॥ ७२ ॥
गोलोमी सिंहलोमी च कुष्ठं भूतजटा तथा ।
महागरुड वेगाच कलशे न्यस्य लांगलिन् ॥ ७३ ॥
महानील [ निला ] गडूचीवा सहदेवी शतावरी ।
विष्णुक्रान्ताच कार्कोटी सान्द्रावद्वि शिखापरे ॥ ॥ ७४
यष्टीवराहकर्णीचा प्यन्यस्मिन् गजपिप्पली ।
श्रीफलाद्यानिचान्यस्मिन् पावनानिफलानिच ॥ ७५ ॥
दधि क्षीराज्य कुम्भाश्च द्वौ मधिक्षु रसान्वितौ ।
मूलान्यम्भोरुहाणांच सान्यन्यस्मि न्द्वयेन्यसेत् ॥ ७६ ॥
द्रुमाणां पावनानान्तु सक्षीराणां विशेषतः ।
पुष्पपत्र फलोपेत मेकस्मि न्मजरीगणम् ॥ ७७ ॥
जात्यादिकं मयैकस्मिन् कौसुमीय लताचयम् ।
रोचना रजनीयुग्मं बलामोटाच पद्मकम् ॥ ७८ ॥
इतिपंचक मेकस्मिन् दर्भा न्दूर्वांकुराणिच ।
सास्यं शाल्यंकुरचयं कलशेन्यत्रपै न्यसेत् ॥ ७९ ॥
सिद्धार्थकान् सितायांस्तु प्रियंगुं गन्धसंज्ञकम् ।
अपरस्मिन्नचसेत्कुंभे सहवैनागकेसरैः ॥ ८० ॥

ग्राम्याश्चौषधय स्सप्त सप्तारण्या घटद्वये ।
बाह्लीक चन्दनं चैव रसं कर्पूर संयुतम् ॥ ८१ ॥
चतुष्कमेतदपरे त्वन्यस्मि न्धातवश्शुभाः ।
ताम्रजाम्बूनदाद्यास्तु परेरत्नचयंमहत ॥ ८२ ॥
न्यसेद्विद्रुमजालंच द्वयो र्मुक्ताफलानिच ।
अर्घ्योदकमथैकस्मि न्नदीतीर्थोदकंद्वये ॥ ८३ ॥
सर्वौषधि घटंचैव सुशीताम्भोघट न्ततः ।
सुगन्धिपुष्पकलश श्चत्वारिंशास्त्वमीस्मृताः ॥ ८४ ॥
वामभागेतु देवस्य अग्निकोणादितोन्यसेत् ।
पुनरीशानकोणात्तु शयनेसप्तधान्यसेत् ॥ ८५ ॥
गन्धोदकेन सम्पूर्णा स्तथावायुपदावधि ।
सर्वाण्याधारकूढानि पूरितान्यमलांभसा ॥८६ ॥
मूलमन्त्रेणतद्वत्तु पूजयेद्वादशात्मना ।
संवेष्टयच्च पुरासूत्रे श्छादयेत्तदनन्तरम् ॥ ८७ ॥
विधानैस्सुवसस्त्वन्ये र्वस्त्रेणाच्छादयेत्ततः ।
तदर्पणावसानेथ शयनंकल्पयेद्विधा ॥ ८८ ॥
सर्वोपकरणोपेत मनन्तंतदधोयजेत् ।
प्रभयाप्यययोगेन तदूर्ध्वेसर्वगंप्रभुम् ॥ ८९ ॥
पादयोस्सर्पसामाथ संज्ञां ज्ञानवलाग्निकाम् ।
हुत्वाशताष्टसंख्यंच मूलंतदनुकल्पयेत ॥ ९० ॥
मण्डलंपावनैरागे स्सिताद्यैर्मागळीयकैः ।
तदूनाधिकशान्त्यर्थं हुत्वाकुण्डगणन्ततः ॥ ९१ ॥
संस्कुर्यात प्रतिकुण्डस्य निकटेकुम्भमध्यगम् ।
प्रभयाप्ययोगेन चातुरात्म्यन्तु संयजेत ॥ ९२ ॥
हृदादियद्वादिक्स्थेषु विदिक्स्थेषु तदस्त्रयट् ।
दत्वातदर्धपूर्णान्तु पूर्णांपूर्णचपाठयेत् ॥९३ ॥

एकायना न्यजुर्मया नाश्रावितदनन्तरम् ।
यथाक्रमन्त्रेणपुरा मङ्गल्यकळशांभसा ॥ ९४ ॥
संक्षेचयेबिम्बंतदनु स्नापयेत्मृदम्भसा ।
पाठयेत्तचकूश्माण्डान् बळमन्त्राननन्तरम् ॥ ९५ ॥
ततोगोमयकुम्भेन इद्दगावःमपाठयेत् ।
भूतिस्त्वमितिमन्त्रेण पठ्यमानेनभूतिना ॥ ९६ ॥
पंचगव्येनतदनु पाठयेच्चतुरस्ततः ।
पूर्ववच्चततोभ्यज्य विधिवच्चमसांबुना ॥ ९७॥
क्षालयित्वार्चयित्वाच निवेश्यशयनान्तरे ।
नेत्राभिमन्त्रितांकृत्वा शलाकान्तैजसीस्वयम् ॥९८॥
संस्मरन्परमंज्योति रीक्षचेत्रेतु चोल्लिखेत् ।
तन्मन्त्रितेनशस्त्रेण शिल्पीद्यातोवलोकितः ॥ ९९ ॥
यथावत्स्फटीकुर्यात विधिदृष्टेनकर्मणा ।
वारुणंपाठयेत्साम सहचान्द्रेणसामगान् ॥ १०० ॥
ततःपात्रद्वयेकृत्वा तैजसेमधुसर्पषी ।
वौषडन्तेनमूलेन सम्पूज्यजुहुयात्ततः ॥ १ ॥
सुक्वन्तममृतौघन्तु हृदाद्यन्तेनसेचयेत् ।
तन्मूर्ध्निशशिबिम्बन्तु ध्यायेत्ताडनशान्तये ॥ २ ॥
स्वदक्षिणंशलाकाद्यं दद्याच्छिल्पिजनायच ।
गोदानमाचरेत्पश्चात् गुरोराराधकस्ततः ॥ ३ ॥
यथाशक्ति तथान्येषां मूर्तिपानां च दक्षिणाः ।
दत्वा समाचरे त्पश्चा द्दाढं साप्यायनन्तु वै ॥ ४ ॥
आमूर्ध्नो द्वादशार्णन्तु मूर्त्यर्थं पूर्ववन्न्यसेत् ।
व्याप्तिसत्ता समायुक्ते संस्कृत्य प्रोक्षणादिना ॥ ५ ॥
पीठेवतार्य संवेष्ट्य वाससा ह्यधरोर्ध्वतः ।
अधःक्रमोदितैः कुम्भै र्द्विष्पोढःवर्तिते हृदा ॥ ६ ॥

स्नापयेत् पाठयेद् द्विमान् ओषधीना मिति श्रुतिम् ।
या ओषधय इत्यादि ऋग्वेदांस्तदनन्तरम् ॥ ७ ॥
एवं दशावशिष्टान्वै स्वेचित्ते कलशे स्वति ।
ततः कुम्भचतुष्केण चतुर्भि र्मूर्तिधारकैः ॥ ८ ॥
ऋक्सामपूर्वं विधिवद् स्नापनीयं च पाठयेत् ।
तद्वत्तमं हि ऋग्वेदान् पाठये द्रविणं यजुः ॥ ९ ॥
ततस्तु वारुणं सामसामह्योथर्वेण स्ततः ।
अयं ते वरुणश्चेति पवित्रं ते ततो ऋचा ॥ ११० ॥
वसोः पवित्रं हि यजुः पाठयेत सामगास्ततः ।
पवित्रं तेहि य स्सामसचोथैकायनां स्ततः ॥ १ ॥
मूर्तिपान् समुदायेन पावमानी चतुष्टयम् ।
तदन्तेतु परं मन्त्रं व्यूहीयं भगवानिति ॥ २ ॥
पवित्रमन्त्रं तदनु इदं विष्णु विचक्रमे ।
ततो विभवमन्त्रैस्तु सर्वं स्सम्मन्त्रितेन च ॥ ३ ॥
कुम्भेन सेचयित्वातु व्यूहमन्त्रैः परेणतु ।
स्नापयित्वा चर्चयित्वातु जुहुयाद साधितं शतम् ॥ ४ ॥
यथावामणवेनाथ ध्यार्मि कृत्वा च पाठयेत् ।
मामगामिति ऋग्वेदा नासेनातु यंजुर्मयान् ॥ ५ ॥
प्राणापानं हि यत्साम ततः प्राणाय वै नमः ।
यातव्येति परं मन्त्रं विप्रा नेकायनां स्ततः ॥ ६ ॥
ध्यानयुक्तो धिया सम्य क्पठे दाराधक स्ततः ।
ॐ ॥ आवाहया म्यमरवृन्दनतांघ्रियुग्मं
लक्ष्मीपतिं भुवनकारण मप्रमेयम् ।
आद्यं सनातनतनुं प्रणवासनस्थं
पूर्णेन्दुभास्करहुताशसदृशस्वरूपम् ॥ ७ ॥

ध्येयं परं सकलवेदविदां च वेद्यं
वाराहकापिलनृकेसरिसौम्यमूर्तिम्।
श्रीवत्सकौस्तुभमहामणिभूषितांगम्
कौमोदकीकमलशंखरथांगहस्तम्॥ ८॥
सर्वत्रगोसि भगवन् किल यद्यपि त्वा
मावाहयामि हि यथा व्यजनेन वायुम्।
गूढो यथैव दहनो मथना दुपैति
ह्यावाहितोपि हि तथा त्व मुपैहि च्चार्चाम्॥ ९॥
माकाधराच्युत विभो परमब्रह्ममूर्ते
सर्वज्ञनाथ परमेश्वर सर्वशक्ते।
आगच्छ मे कुरुदयां प्रतिमां भजस्व
पूजां गृहाण मदनुग्रहकाम्ययाद्य॥ १२०॥
ततो विसृज्य यन्त्रेण भोगैः पूर्वोदितैर्यजेत्।
अर्घ्याद्ये दक्षिणान्तैस्तु पाठये द्वक्ष्मयांस्ततः॥ १॥
अर्चामितेतिवैमन्त्रं सामयञ्चार्चितस्त्विति।
भगवानिति तज्ज्ञांस्तु ततस्संतर्प्य तेनले॥ २॥
स्तुत्वाजितन्ते मन्त्रेण सामज्ञान् पाठयेत्पुनः।
ऋग्गायत्रसाम्नातु तद्रथन्तरसंज्ञितम्॥ ३॥
प्रजप्य द्वादशार्णन्तु मुद्राम्बद्ध्वा प्रणम्यच।
अष्टांगेनाथविज्ञाप्यो भगवान्भूतभावनः॥ ४॥
मूर्तिभूतेनरूपेण अनेनैवहिसांप्रतम्।
लोकानज्ञाततत्वांस्तु समाह्लादय नागरान्॥ ५॥
येनान्तस्सम्प्रविष्टेन इंपत्कालवशात्तवै।
जन्मान्तरसहस्रोत्था न्मोक्षमायान्तिकिल्बिषात्॥ ६॥
एवमभ्यर्थ्यहि भगवां ल्लोकानुग्रहकृत्प्रभुः।
करावंघ्रिगवीकृत्वा पाठयेद्वक्ष्मयांस्ततः॥ ७॥

उत्तिष्ठेति ऋचो मन्त्रं कृत्वा ब्रह्मरथे स्थिरे ।
सुयन्त्रितेच क्षीराज्ये दध्योधनसमन्विते ॥ ८ ॥
दुर्भिक्षक्षामशान्त्यर्थं परमान्नफलैर्युते ।
पाठयेदस्यवामीय मृन्मयां स्वदनन्तरम् ॥ ९ ॥
तन्मयान्वलमन्त्रन्तु दशार्धैर्विमहामते ।
स्वयमायन्तसंरुद्धं हृशातुकवचज्ञपेत् ॥ १३० ॥
भ्रामयेद्बलिदानन्तु क्रियमाणन्तुसर्वदिक् ।
रत्नकाञ्चनवस्त्राणां पूर्ववत्क्षेपमाचरेत् ॥ १ ॥
दिव्याद्यायतनानांच कार्यापूजायथोदिता ।
पंचरात्रविदांचैव यतीनां ब्रह्मचारिणाम् ॥ २ ॥
षट्कर्मनिरतानांच दानन्दीनजनेष्वपि ।
रथस्थेमन्त्रविम्बेतु यावत्पदशतं व्रजेत् ॥ ३ ॥
स्वरथस्तूर्यघोषेण तावत्क्रतुफलम्बहु ।
आप्नोत्याराधकश्शश्वत् सकामोनियतव्रतः ॥ ४ ॥
ततस्तोरणदेशस्थं रथंकृत्वार्चयेत्प्रभुम् ।
पाद्यार्घ्यपुष्पधूपैस्तु नमस्कृत्यचपाठयेत् ॥ ५ ॥
उत्तिष्ठेतिद्विषट्कार्णं सजितन्तन्तु चाखिलम् ।
सम्पठन्पौरुषंसूक्तं यागवेश्मप्रवेशयेत् ॥ ६ ॥
हृदाशयनगंकृत्वा यात्राहोमं समापयेत् ।
ततस्तच्छिरसोदेशे चक्राधारस्थितेघटे ॥ ७ ॥
पूर्वोक्तलक्षणेनैव मन्त्रसम्पुटितंयजेत् ।
पूजयित्वार्घ्यपुष्पाद्यैः शयनस्थंचवैपुनः ॥ ८ ॥
मर्मणाच्छादयन्वस्त्रैः ततोऽग्निनिकटे विभोः ।
स्थित्वालांछनमन्त्रांस्तु यथास्थानगतान्नयसेत् ॥ ९ ॥
पादाद्वैद्वादशांगेषु ततोदामोदरादिकान् ।
तच्छक्तिकांस्तथामन्त्रान् भास्वद्व्यापक लक्षणान् ॥ १४० ॥

ऐश्वरेणाथ बीजेन यथावस्थेनभावयेत् ।
पादादितन्मयेनैव तद्वन्मन्त्रवरेणतु ॥ १ ॥
प्राग्वद्व्याप्यप्रयुक्त्यातु अन्तर्ज्योतिर्मयात्मना ।
विभुनावात्स्वरूपेण तदेवाथपरम्परम् ॥ २ ॥
सुशान्तंसर्वगम्बुध्वा निस्तरंगमिवोदधिम् ।
विद्यांगदामित्याद्यं त्वाउयेत त्पांचरात्रिकान् ॥ ३ ॥
देहस्थान्प्रधाविकंमन्त्रं धारणाख्यमनन्तरम् ।
जीमूतस्येतिऋग्वेदा त्रासदासीच्चपाउयेत ॥ ४ ॥
क्रमेणानेनभुक्त्वा[हुत्वा]तु पादार्धशतसंख्यया ।
तिलानान्तुतथाज्यस्य मन्त्रैरेभिर्महामते ॥ ५ ॥
दत्वापूर्णाहुतिंसम्य शुपसंहारलक्षणाम् ।
ततस्तत्परमंब्रह्म ह्युदितपूर्ववत्स्मरेत् ॥ ६ ॥
सर्वशक्तिमयेनैव स्वभावेनस्वकेनतु ।
ओजोबलात्मनायद्वत् गन्धद्रव्यात्मनातुवै ॥ ७ ॥
बीजन्तद्स्वरूपेण समुद्रोद्बुद्बुदात्मना ।
एवमव्यपदेश्याया शक्तेस्स्वेशक्तिदर्पणे ॥ ८ ॥
स्थितिमादायविश्वेश· स्वातन्त्र्याच्चमहामते ।
मन्त्ररूपान्तनुंव्यक्ते सम्यगाराधनायच ॥ ९ ॥
नानात्वमुपयातस्य प्रसरन्तस्यचस्वयम् ।
निष्प्रभत्वमयातस्य चिद्बीजनिचयस्यच ॥ १५० ॥
आविष्कृतस्यभेदेना प्यमूर्तेनपलीयसा ।
अज्ञानगहनेनैव नित्यानित्यमयात्मना ॥ १ ॥
स्मृत्वैवमूलमन्त्रन्तु बिम्बरूपप्रगंस्मरेत् ।
षट्शक्तिकिरणोपेते स्वैस्तद्व्यमयीन्ततुम् ॥ २ ॥
संस्मरेत्पुरस्तत्त्च प्रागुक्तेनैववर्त्मना ।
स्वरूपममलम्भूय स्मरेन्मूर्त्यात्मनाततः ॥ ३ ॥

नयन्संपूर्वविधिना एवंसपरमेश्वरः ।
मन्त्रात्मनाभ्वतन्त्रत्व मुपयावोयदातदा ॥ ४॥
सहस्रशिरसन्देव मितिस [ स्यध ] वीस्तु चोदयेत् ।
पातयेत ब्राह्मणान्धातर्यध्यक्षेति च मन्त्रराट् ॥ ५ ॥
योविश्वतश्चक्षुरिति यासव्योभवतीतिच ।
द्वासुपर्णेतितदनु अतोदेवेतिवैपुनः ॥ ६ ॥
ऋङ्मयान्पौरुषं सूक्तंततःपरतमावि [ न्निवति ] ति ।
ततोर्चयित्वामन्त्रेशं शयनेबिम्बमूर्तिगम् ॥ ७ ॥
नित्यसन्निधिसिद्ध्यर्थं मासमात्रिन्तुमण्डले ।
संरोद्ध्यसन्निधीकृत्य महतायिभयेनतु ॥ ८ ॥
सांगंसन्तर्प्यविधिवत सहमूर्ति धरैस्ततः ।
स्वमूर्तिकुम्भान्मन्त्रेण जळमुद्धृत्यभाजने ॥ ९ ॥
बिम्बमूर्ध्निक्रमाद्दिद्यं सर्वैरेकायनादिकैः ।
सन्तर्पयित्वातदनु मन्त्रंसपरिवारकम् ॥ १६० ॥
आज्यादिनाप्रभूतेन दत्वापूर्णाहुतिन्ततः ।
बिम्बात्मनाप्रयातानां क्ष्मादीनां मंगरूपिणाम् ॥ १ ॥
आपादानेपिपूर्णत्वात् पिण्डीभावार्थमेवच ।
आरम्भादेवजातानां छिद्राणांशमनेतुवै ॥ २ ॥
आप्यायनार्थमन्त्राणां द्रव्यैर्होमंसमाचरेत ।
द्विषट्केनाहुतीनान्तु एकैकेनचतुर्दश ॥ ३ ॥
आचांघ्रे जांनुपर्यन्त स्पृष्ट्वाज्यं होमयेत्पुरा ।
आनाभिजानुदेशाच्च तथैव जुहुया द्धि ॥ ४ ॥
नाभे राकर्णतः क्षीरं माकर्णा दाशिरो मधु ।
सम्मेल्य जुहुया त्सर्वं स्पृष्ट्वा देहन्तु चाखिलम् ॥ ५ ॥
संस्कृत्य बिम्बवत्पीठं भिन्नं ब्रह्मशिलां तथा ।
प्राणाभिमानदेवं वा यस्य यो विदित स्तु वै ॥ ६ ॥

घेष्टपिवाम्बरै क्षिते अस्त्रमन्त्रेण चै ततः ।
कार्यो महाशिलाहोम श्शताष्टाधिकसंख्यया ॥ ७ ॥
गायत्रीभि स्तदर्धं च बहृवृचाद्यैः पृथ क्पृथक् ।
अजस्य नाभावित्यादिमन्त्रै रेकायनै स्ततः ॥ ८ ॥
अध्याधिभूतमूर्तन्तु भोग्यं यापि पृथ क्स्थितम् ।
देवतानां त्वधिष्ठानं पीठं कृत्वा थ शुद्धिगम् ॥ ९ ॥
होतव्यं प्रणवेनैव स्वयं व्याहृतिभि स्तुतैः ।
अपरे मूलमन्त्रेण प्रणवान्तेन लांगलिन् ॥ १७० ॥
ततो वाहनमन्त्रेण तर्पणीय स्सदैवहि ।
स्वनाम्ना प्रणवेनैव स्वाहान्तेनापरे स्ततः ॥ १ ॥
संरोध स्तर्पितानान्तु कार्यः पूर्णान्त एव हि ।
साम्भसा विष्टरेणैव भावेन सजपेनच ॥ २ ॥
सर्वेश्वरस्य देवस्य स्वकीयासु च मूर्तिषु ।
शब्दात्मिकासु मूर्तासु तद्वच्छ्रुतिमयस्य च ॥ ३ ॥
कृत्वैवंच यथादिक्षु मूर्तिपान् विनिवेश्य च ।
पार्श्वदेशेषु कुण्डानां तर्पये त्सायमेवतु ॥ ४ ॥
गृहीत्वा दक्षिणां मन्त्रः प्रीणनीयस्तु ते स्ततः ।
अथ निद्रावमाणन्तु देवं स्मृत्वावकुण्ठ्य च ॥ ५ ॥
अर्चयित्वा नमस्कृत्य तत्र सर्वान् प्रवेशयेद् ।
स्तुतिपाठकपूर्वांस्तु नृत्तगेयपरायणान् ॥ ६ ॥
विदिक्स्थान् प्रणवे जापे द्वादशार्णेन दिक्स्थितान् ।
सार्घ्यपुष्पाक्षतकरः प्रासादन्तं व्रजेत्ततः ॥ ७ ॥
हन्यात सिद्धार्थकै स्तस्मा द्विघ्ना नस्त्राभिमन्त्रितैः ।
प्राङ्गमध्ये विधिनानेन श्वभ्रं वा साम्प्रतं खनेत् ॥ ८ ॥
विनिश्चितं यथा मानं गार्भं कुर्यात्तु सप्तधा ।
द्वारदेशा त्समारभ्य समै स्सूत्रैस्तु सर्वदिक् ॥ ९ ॥

द्वारमध्ये पदान्तन्तु पादाना मधिदेवताः ।
पिशाचो न्मानषा देवा परमः पुरुषो हि यः ॥ १८० ॥
चातुरात्म्यं विनान्येषां स्थापितानां महामते ।
आराधनं च स्वस्थाना दचिरादेव सिद्धिकृत् ॥ १ ॥
आक्रम्य देवभागं च देव आराध्यते यदि ।
भवन्ति बहवो विघ्नाः वर्जनीया स्ततस्तु सः ॥ २ ॥
शुभेन भद्रपीठेन द्वैवीयेनाथ लांगलिन् ।
चातुरात्म्यप्रतिष्ठायां शिलास्थं मध्यमं पदम् ॥ ३ ॥
गर्भमध्यपदद्वयोर्ध्वे योजनीयं प्रयत्नतः ।
अतोन्यितांश मेकन्तु त्यक्त्वा वै पृष्ठदेशतः ॥ ४ ॥
शिलापदद्वयस्यान्ते योजनीया महामते ।
अग्रदेशेथ बिम्बस्य वेदि भागद्वयोपरि ॥ ५ ॥
चतुरश्रायतस्यैवत्र पीठस्यस्थापनेहितम् ।
एवंहिचतुरश्रस्य विधानंकिन्तुलांगलिन् ॥ ६ ॥
संचार्योत्थमतंविदि नित्यमाराधनार्थतः ।
पीठोपर्यथवादेवं यस्त्वाराधयतेसदा ॥ ७ ॥
निवेशनीयावेतेन मध्यदेशेनसाशिला ।
एवमाराधनवशा त्तथाफलवशात्तुवै ॥ ८ ॥
सपीठानांचबिम्बानां कार्यसम्यङ्निवेशनम् ।
देवमानुषभागाश्च वेदिकासुम्भिकम्भवेत् ॥ ९ ॥
विबुधब्रह्मभागाश्च सैद्धिकन्तुगुणाष्टकम् ।
अपवर्गेतुसामान्य मकामानामयंविधिः ॥ १९० ॥
भिन्नेपेक्षावशान्मध्ये सतिभूयस्समाचरेत् ।
गालितेस्त्वंबुनालिप्ते हृद्यावैचन्दनादिना ॥ १ ॥
श्वभ्रेयोथटहृद्वानां मन्त्राणांचनिरोधनम् ।
पूर्वोक्तेनविधानेन पिधायस्वेस्वेयनेतथा ॥ २ ॥

कृत्वार्चनंयथोद्दिष्टं पूर्णान्तंतत्रविन्यसेत् ।
चाङ्गुलेनतुपट्पंच चतुर्गोलकसम्मिताम् ॥ ३ ॥
पीठाद्विनिर्गतांकिंचिद् भूतयेसुस्थिरांशिलाम् ।
अस्त्रांपीठेनमुक्तयर्थं नवरत्नकृतांपुरा ॥ ४ ॥
सुमन्त्रेणतुतत्रापि प्रतिष्ठासीतिपाठयेत् ।
प्रागादौप्राभवेनाथ पंचकंपंचकंन्यसेत ॥ ५ ॥
शिलाग्रदेपुद्रव्याणां तत्ववज्रथहाटकम् ।
हरितालमुशीरंच मीद्ययोदक्षिणेत्वथ ॥ ६ ॥
पाटिकांसर्वीशदिग्वाय्वोः पुष्परागोहरीतकी ।
मध्येसर्वाणितद्वत्तु ततोगतंगणन्तुतत् ॥ ७ ॥
लेपैराच्छादितंकृत्वा सांगमन्त्रंपदंपदे ।
पूजयित्वाप्सुवैदां श्वमपङ्कांश्चपाठयेत ॥ ८ ॥
तदूर्ध्वंविन्यसेत्पीठं तच्छ्वभ्रेविनिवेश्यच ।
अष्टलोहमयंचक्रं तदूर्ध्वेतुमहामते ॥ ९ ॥
द्वादशाङ्गपाद्विशेषोऽथा ह्याधारोयस्ययःस्वकः ।
हेमंतदूर्ध्वेकाले तजंवाताम्रमेथवा ॥ २०० ॥
यथाक्रमस्थितंहित स्पंचकंचतुरात्मनि ।
न्यसेदनन्तंचक्रस्य मीनकूर्मौकृतस्यच ॥ १ ॥
सर्वस्यविदितंपद्मं तस्यानन्तन्तुविन्यसेत् ।
मण्टपेतुखगेशस्य चक्रस्थापनकर्मणि ॥ २ ॥
न्यस्यपूर्वान्तिकंकृत्वा कर्मण्यत्रचतर्पणम् ।
सद्मूर्तिधरैःप्राग्वत् कार्यादर्भोदककिया ॥ ३ ॥
ततःप्रबोधयेद्देवं अर्चयित्वा इदंपठेत ।
मन्त्रात्मन्रूपमात्मीय मायेयमुपसंहर ॥ ४ ॥
समाश्रयस्वसौम्यत्वं स्थित्यर्थंपरमेश्वर ।
नमस्तेस्तुहृषीकेश उत्तिष्ठपरमेश्वर ॥ ५ ॥

मदनुग्रहहेत्वर्थं पीठभूमिसमाश्रय ।
तद्घाट्यहृदयेनाथ त्यक्तनिद्रन्तुमन्त्रराट् ॥ ६ ॥
तथाप्यमूर्तिमन्त्रेण सहमूर्तिधरैर्बलात् ।
तोरणेनचनिष्क्रम्य प्रदक्षिणचतुष्टयम् ॥ ७ ॥
कुर्यात्प्रासादपीठस्य द्वाराग्रेसन्निरोध्यच ।
पाद्यार्घ्याचमनन्दत्वा हन्मन्त्रेणप्रवेशयेत् ॥ ८ ॥
शाखायमस्पृशन्तंच पाठयेत्तद्विदस्ततः ।
चतुश्चक्रेतितद्वत्तु पुरमेकादशेतियत् ॥ ९ ॥
वर्माभिमन्त्रितेनाथ दुकूलेनसितेनच ।
पादांगुरुहनाळग्मा न्शिखामन्त्रेणवेष्टयेत् ॥ २१० ॥
शय्यांपीठेसमीकृत्य प्रणवाद्यन्तगेनतु ।
निवेश्यमूलमन्त्रेण वामतोमारुतंत्यजेत् ॥ १ ॥
प्रतिष्ठालिंगशब्दौच द्वौमन्त्रौ पाठयेत्क्रमात् ।
शांतम्ब्रह्ममयंरूपं स्वकंसमवलम्ब्यच ॥ २ ॥
यतोहिताथसर्वेषां निर्गतष्षड्गुणात्मना ।
अतोब्रह्मपदादीप देवभागेसमानयेत् ॥ ३ ॥
मोक्षादिफलसिद्धीनां प्राप्तयेह्यविचारतः ।
करस्थमथमोक्तव्यं कौतुकंहृदयेनतु ॥ ४ ॥
सर्वांगमर्घ्यमन्त्रेण दत्वामूलमनुस्मरेत् ।
इतिसामान्यसन्धानं प्राक्कृत्वातद्विशेष्यच ॥ ५ ॥
हृदास्त्रपरिजप्तेन वज्रलेपेनवैततः ।
बिम्बपीठशिलानांतु एकत्वेनाचरेत्स्थितिम् ॥ ६ ॥
मूलमन्त्रन्ततोध्यात्वा सुशान्तब्रह्मलक्षणम् ।
आचाधारात्प्रध्वजाग्रांतं व्याप्तन्तेनाखिलंस्मरेत् ॥ ७ ॥
इतिसामान्यसन्धानं प्राक्कृत्वातद्विशेष्यते ।
स्थूलसूक्ष्मपरत्वेन स्थूलंपीठशिलान्तगम् ॥ ८ ॥

पिण्डिकायां तथासूक्ष्मं तत्परंबिम्बविग्रहे ।
विन्यासंपीठमूलेच देवतानां समाचरेत् ॥ ९ ॥
भवोपकरणीयानां पीठोर्ध्वेत्वथतद्विना ।
न्यसेद्विभवदेवांस्तु उपर्युपरिपूर्ववत् ॥ २२० ॥
पद्मोद्देशात्समारभ्य परमर्चांगतन्ततः ।
एवंहिसर्वदेवानां सन्निवेशप्रशान्तये ॥ १ ॥
चिन्तामणिमयोन्यासः कृतोभवतिसिद्धिदः ।
अथमण्डपमध्येतु देवदेवस्यसम्मुखम् ॥ २ ॥
स्थितेपितन्मुहूर्तांशे स्थापनीयश्चपक्षिराट् ।
स्नातोनुष्ठितहोमन्त्रेण स्वेनयस्संस्कृतःपुरा ॥ ३ ॥
तच्छक्त्यासहबिम्बेन यस्माद्विन्नेषुवस्तुषु ।
बिम्बसन्निकटस्थेषु अथवान्यत्रलांगलिन् ॥ ४ ॥
तत्कालमंगभावत्वं व्रजमानेषुसर्वधा ।
हवनांतचनिश्शेषं ध्यानार्चनपुरस्सरम् ॥ ५ ॥
स्वयमेवानुरूपेण कर्मसामान्यतांत्यजेत् ।
तस्मात्तथागभवनात् तथाप्यादायबिम्बवत् ॥ ६ ॥
देवंप्रदक्षिणीकृत्य प्राग्वत्संस्थापनावनौ ।
एकस्मिन्मण्डपस्मिंतु यत्राद्यंपंचकंन्यसेत् ॥ ७ ॥
एकएवतदूर्ध्वेच आधारोय उदीरितः ।
प्राग्वन्निवेशनीयंच तत्पीठोर्ध्वास्तुभावनाः ॥ ८ ॥
भावनीयं शरीरेच शेषं विज्ञानिलक्षणम् ।
पाठये ब्राह्मणां स्तद्वत्सुपर्णोसीति मन्त्रराट् ॥ ९ ॥
तमेवाभ्यर्चितं कृत्वा याया द्देवनिकेतनम् ।
कलशै· पृष्ठभागस्थै स्स्नापनीय स्ततो विभुः ॥ २३० ॥
सह मूर्तिधरै स्सर्वै र्यथाचानुक्रमेणतु ।
सद्राग्रमर्पणेनैव गायत्र्या वर्तितेनतु ॥ १ ॥

प्रागुदमपरस्तु तदनु चतुर्थावर्तिते स्स्वयम् ।
इदाद्यावर्तिते च्चङ्कभि र्यजु र्मूस्वेन सेचयेत ॥ २ ॥
भूय स्स्वयं तथा कुम्भे स्सामवित् स्नापये त्ततः ।
षड्भि स्त्ये स्स्वयं पश्चात् तेनैवाथर्ववित्ततः ॥ ३ ॥
पवित्रावर्जिते रेवं कळशै स्न्तरान्तरा ।
सह चैकायनीयैस्तु स्नपनीय मनन्तरम् ॥ ४ ॥
चतुर्मूर्तिमयै मंन्त्रैः बहुशः परिभावितैः ।
स्नापये त्कळशेनाथ शेष मादाय वै घटम् ॥ ५ ॥
तच्छतावर्तितं कृत्वा समूलेनाथ मूर्तिना ।
सार्धं वै देवदेवस्य मूर्ध्नि चोत्कीर्य पाठयेत् ॥ ६ ॥
जितन्त इति वै सर्वा स्ततश्चास्त्रोदकेन च ।
प्रासादं शोधयित्वा च स्नानवर्जं समाचरेत् ॥ ७ ॥
पूर्वोक्त मासनाद्यं यथागदानावसानिकम् ।
सदक्षिणं विशेषेण गुरौ मूर्तिधरेष्वथ ॥ ८ ॥
देवं प्रणम्य विज्ञाप्य कर्मणा मनसा गिरा ।
स्वमर्चान्तर्गतो देव मया यच्छयतादिषु ॥ ९ ॥
नीतोसि चाभिमुख्यन्तु क्षन्तव्यं तन्ममाच्युत ।
एवं प्रणम्य विज्ञाप्य क्षान्त्वा निष्क्रम्य सम्मुखम् ॥ १४० ॥
आचम्य च बलिं दत्वा याया द्देवगृहं ततः ।
तत्रासनादिकै रिष्ट्वा स्नानान्तैः पूर्ववत्प्रभुम् ॥ १ ॥
अपनीताम्बरैः कुम्भै र्धान्यपीठोपरि स्थितैः ।
हृन्मन्त्रपूजितै भूंय स्सलिलेन सुपूरितैः ॥ २ ॥
सह मूर्तिधरैः प्राग्वदन्तरान्तरयोगतः ।
कार्यं वा स्नानकर्माथ विधिदृष्टेन कर्मणा ॥ ३ ॥
निरोदकेथ प्रासादे पुन राराध्य पूर्ववत् ।
भोगै रासनपूर्वैस्तु सम्प्रदानान्त मच्युतम् ॥ ४ ॥

मुद्रां बध्वा जपे न्मन्त्रं स्तुत्त्वा क्षान्त्वा यदि ग्रंजेत् ।
शतं सहस्रं सार्धं वा जुहुया न्मन्त्रराट् स्वयम् ॥ ५ ॥
सांगं सपरिवारं च संहितोच्चारयुक्तितः ।
मूर्तीपैः प्रणवाद्याभि र्गायत्रीभि श्शतं शतम् ॥ ६ ॥
एकायने रभिज्ञाभि स्स्वकीयाभिस्तु तत्समम् ।
महापये नतः पूर्णां ऋग्वेदाद्यां स्तु मूर्तिपान् ॥ ७ ॥
एकायनांस्तदन्तेतु क्रमात्तान्पाठयेत्ततः ।
पूर्णांपूर्णेतिमेमन्त्र माद्यात्पूर्णमर्शातियत् ॥ ८ ॥
सनमस्केनमन्त्रेण स्वयंसांगेन निक्षिपेत् ।
बलिभिस्तुततस्सर्वान् भूतपूर्वांस्तुतर्पयेत ॥ ९ ॥
प्रविश्याचम्यतद्नु क्षान्तयादेवन्तुकुम्भगम् ।
पूर्ववन्मण्डलस्थन्तु कुण्डस्थन्तदनन्तरम् ॥ २५० ॥
भूषयेद्गुरुपूर्वांस्तु भूषणैः कटकादिकैः ।
गुरोर्वागुरुपुत्रस्य यागद्रव्यं निवेदयेत् ॥ १ ॥
बिम्बमेकायनान्तन्तु सर्वसाधनसंयुतम् ।
दासीकर्मकरोपेतं शुद्धदेवलकान्वितम् ॥ २ ॥
शैलोत्थं पूर्ववत्कुम्भं कृत्वाधातुमयन्तुवा ।
तद्विगोळकमानेन मन्त्रबिम्बेनवेसह ॥ ३ ॥
शुभेन्यस्मिन्दिनेयाग मण्टपेद्युक्तलक्षणे ।
अधिवास्ययथान्यायं सर्वोपकरणान्वितम् ॥ ४ ॥
स्नानाद्यमखिलन्ताभ्या मापाद्यचयथाविधि ।
तस्मिन्हृदादिसंयुक्ते बिम्बंकुम्भेनिवेश्यच ॥ ५ ॥
वस्त्रैराभरणैःपुष्पै स्स्वच्छंकृत्वार्घ्यं पुष्पहृत ।
शनैःप्रासादपर्यन्त मारोहेन्मूर्तिपैस्सह ॥ ६ ॥
तत्रप्रागासनादींस्तु कृत्वासंक्षाळनान्तिमान् ।
भाचरेद्वीजविन्यासं सर्ववाचादनोदितम् ॥ ७ ॥

निवेश्य पानीयतम्मध्ये विम्बंकुम्भसमन्वितम् ।
दृढायन्तनिरुद्धेन मूलमन्त्रेणलांगलिन् ॥ ८ ॥
तत्राद्यमनुसन्धान मेवंकृत्वापरात्मकम् ।
सामान्यलक्षणं पश्चा त्पूर्वोद्दिष्टेनवर्त्मना ॥ ९ ॥
समालभ्यार्चयित्वाच स्रगाद्यैर्घण्टयेत्ततः ।
पूर्वयत्पाठयेद्विप्रान् तत्प्रतिष्ठापनेतुवै ॥ २६० ॥
संरोध्यवर्ममन्त्रन्तु तत्रध्यानधियास्वयम् ।
पूर्णतमखिलंकृत्वा विधिनानेनवैपुनः ॥ १ ॥
आरोहेतितुवेसाम पाठयेत्सामगांस्तुवै ।
चक्रमामळसारस्य मध्यतःसन्निवेशयेत ॥ २ ॥
यथाभिमतरूपन्तु दिग्वक्त्रंवाम्बराननम् ।
स्वशक्तिवर्णदृष्टस्थं चण्डमार्ताण्डभासुरम् ॥ ३ ॥
चक्रमन्त्रंन्यसेत्तस्मि न्वर्णध्यानपुरोदितम् ।
गत्यागतिप्रयोगेन प्राक्प्रमेयजलक्षणम् ॥ ४ ॥
नान्यथावापुराज्ञात्वा द्रव्यमूर्तित्वमागतम् ।
कुर्यात्ततोध्वसन्धानं नान्यथातुमहामते ॥ ५ ॥
अमलंशांतसंहंवे तथाशांतोदितोदितम् ।
एवमेवहितन्मूर्ति यश्चक्रेवेत्तितत्वतः ॥ ६ ॥
सोस्मिन्संसारचक्रेतु सर्वाश्रमनिवासिनाम् ।
सर्वधर्मरतानांच चक्रमूर्तित्वमाप्नुयात ॥ ७ ॥
यच्छक्तिर्ब्रह्ममूर्त्यैव सिद्धामोक्षान्निराश्रया ।
अन्तर्बहिस्थं सर्वेषां मोक्षदंचामलंस्मृतम् ॥ ८ ॥
क्षीरोदार्णवतुल्यंच त्सहस्रादित्यसन्निभम् ।
निरंगन्तीक्ष्णधारंवै तच्छान्ताख्यंहियोगतः ॥ ९ ॥
यत्तुनानांगभावेन स्वातन्त्र्यात्स्वयमेवहि ।
सर्वदिक्प्रसृतांकृत्वा स्वात्ममूर्त्तिर्हिवर्तते ॥ २७० ॥

ईषद्धलयवर्णाभे नराणामन्तरेखवत् ।
शातोदिनंच तद्विद्धि चक्रमिच्छामदंचयत् ॥ १ ॥
यावन्मूर्तौचसम्बन्ध स्सर्वकृत्वावतिष्ठते ।
प्रवृत्तं नाभिपूर्वन्तु उदिताख्यं हि चक्रराट् ॥ २ ॥
तस्मि न्नाराधितो मन्त्र स्तद्वै सम्पूजित स्मृतम् ।
जप्तं सन्तर्पितं भक्त्या सर्वेषां सर्व मृच्छति ॥ ३ ॥
एवं चाभिमतं चक्रं सर्वविघ्नक्षयंकरम् ।
प्रतिष्ठाप्य समभ्यर्च्य तस्यैव समनन्तरम् ॥ ४ ॥
स्वंशेन शिखरा दुच्चं खगराट्परिभूषितम् ।
संस्कृत्य ध्वजदण्डंच शिखामन्त्रेण विन्यसेत् ॥ ५ ॥
ततो विविधवर्णं च किंकिणीगणभूषितम् ।
ध्वजाग्रा च्छिखरार्धं च यावद्दीर्घं मकृत्रिमम् ॥ ६ ॥
दैर्घ्याद्द्वादशमांशेन द्विनवांशेनयाततम् ।
कृत्वास्त्रसन्निधिं तस्मिन् लांछनाख्ये पुरा पटे ॥ ७ ॥
निवेश्य ध्वजदण्डाग्रे गन्धाद्यै रर्चये ततः ।
स्वयंकृतानां बिम्बानां मयेदं सम्प्रकाशितम् ॥ ८ ॥
प्रतिष्ठापन मब्जाक्ष स्वतन्त्रे स्वयनेषु च ।
सांकर्येण विना ह्येवं कृतं भवति सिद्धिदम् ॥ ९ ॥
अन्यथा सिद्धिदं विद्धि नृणां व्यामिश्रयाजिनाम् ।
एकस्मि न्नासने स्थाने चतुस्त्रिद्व्यादिमूर्तिना ॥ २८० ॥
व्यक्तीभूतं यथा लोके लोकानुग्रहकाम्यया ।
स्वयं नानास्वरूपेण स्वर्गादौ स्थापनं तथा ॥ १ ॥
न कार्यं मनुजै र्वर्णे धर्मज्ञै र्नैकभावनै ।
तथा वै समबुद्धिस्थैः कृपया सम्प्रवर्तकैः ॥ २ ॥
क्रियाभेदरतै श्शुद्धै र्नानाविबुधराजकैः ।
प्रणवैकप्रलापस्थै श्शान्तचित्तै रमत्सरैः ॥ ३ ॥

मन्त्रमुद्राक्रमध्यान सम्भूतिलयलक्षकैः ।
तथा तत्संकरोत्पन्नदोषाणां ध्वंसनक्षमैः ॥ ४ ॥
प्रस्थापितस्तु वै सम्यक् ज्ञानमूर्त्तिर्जगद्गुरुः ।
भिन्नमन्त्रक्रियारूपं न कुर्यात्तदपेक्षया ॥ ५ ॥
साधारमालयं पीठं भवाख्यं विभवात्मनाम् ।
देवानां मर्त्यधर्मस्थैः प्रतिष्ठा यज्ञकर्मणि ॥ ६ ॥
संसारदेवतानां च स्थापितानां तु वै पुरा ।
कृत्वा तु भगवद्बिम्ब मालयेवा तदासने ॥ ७ ॥
निवेशयति यो मोहात् बिम्बेन सह तस्य वै ।
जायते च भयं घोर मिहामुष्मिकदोषदम् ॥ ८ ॥
नाप्नोत्याराधकानान्तु सकाशा दर्चनं परम् ।
यथा बिम्बं तथा कर्ता नाप्नुयादुत्तमं फलम् ॥ ९ ॥
अर्चाया माधिके पीठं सापेक्षा लक्षणोज्झिते ।
शक्त्द्विभवदेवानां स्थापनं न विरोधकृत् ॥ २९० ॥
नान्यकाले न चान्यस्य नान्यमूर्तिनिवेशनम् ।
विहितं भगवत्पीठे विनष्टप्रत्ययं विना ॥ १ ॥
यथा भयोपकरण देवानां मण्डलेऽर्चनम् ।
विहितं न तथा पीठे ह्येकस्मिन् सन्निवेशनम् ॥ २ ॥
भिन्नकर्मेपि यः कुर्या त्स्थापनं वा पिण्डिकोपरि ।
वामदक्षिणयो रेवं देवानामप्रदक्षिणम् ॥ ३ ॥
सदक्षिणस्य वै तेन प्रतिष्ठाख्यमखस्य च ।
निहता चोन्नता कीर्ति स्तेनाप त्वप मेव हि ॥ ४ ॥
प्राक्स्थितस्याधिकं माना द्विगुणेनोर्ध्वहानिकृत् ।
शस्तमप्यतनस्यैव प्राक्स्थितंयत्तदोधिकम् ॥ ५ ॥
नेच्छायन्योन्यसामन्तु स्थानवृत्तिधनैस्सह ।
वस्त्रासनसंख्यादि मानहीनस्तुसर्वदा ॥ ६ ॥

मानहीनस्तुकर्तॄणां कुर्यात्सुतसुखक्षयम् ।
बिम्बस्यबिम्बकर्तुर्वै देहिनांस्थापकस्यच ॥ ७ ॥
वामकुरस्थापनं [वामे] यद्वा सममूनन्तुवाधिकम् ।
एवंज्ञात्वायथाशक्ति पृथक्कुर्यान्निवेशनम् ॥ ८ ॥
सिद्ध्येचापवर्गार्थ मर्चनांदेवताळये ।
प्रतोळीसांगनागार जगतीदेवमन्दिरम् ॥ ९ ॥
सपीठंभगवद्बिम्बं भक्तानांयत्रयुज्यते ।
सम्यक्प्रदक्षिणीकृत्य बलिधूपपुरस्सरम् ॥ ३०० ॥
श्वेतद्वीपसमंविद्धि देवतायतनंतुतत् ।
सन्निवेशस्स्वयंमुख्यः अमुख्यस्सपरोहियः ॥ १ ॥
मुख्यात्पूर्णफलमाप्ति र्मुख्याभावात्तथाविधा ।
सम्यक्स्याप्यादिदेवीया मूर्तयोयाःपुरोदिताः ॥ २ ॥
स्थलंविनानचैवार्च्या नित्यविभैस्तुबिम्बगाः ।
गृहेपीठगताबिम्बे पुनस्तापत्रगाबहिः ॥ ३ ॥
सदैवतेस्समाराध्या भूतयेपिहिमुक्तये ।
सवाहनेऽवाहने वा बहिर्वास्वगृहान्तरे ॥ ४ ॥
नार्चनीयाद्गृपावैस्तु बिम्बेवैमण्ड [सक] लाद्दते ।
सुपर्णसंस्थिवास्सर्वे बिम्बावैब्राह्मणेर्नृपैः ॥ ५ ॥
स्वगृहादौचसर्वत्र पूजनीयास्सदैवहि ।
एवमन्यास्तुवैश्यान्वै स्वत्तमेरखिलास्तुयाः ॥ ६ ॥
सहशक्तीशभेदैस्तु नशक्तीशस्सवाहनः ।
बिम्बगोब्राह्मणायैश्च नित्यमर्च्य.पृथग्विना ॥ ७ ॥
स्वाश्रमे बन्धुवर्गस्य मध्यस्थो हानिशन्तुवै ।
भविनासौम्यरूपेण अभ्युत्पन्नजनस्यच ॥ ८ ॥
इगतेभगवद्वक्त्रे कार्यंत्रैलोक्यभीतिदे ।
यच्छन्तिशुभमानार्या श्चित्रस्थाश्चाशुभंगृहे ॥ ९ ॥

बहिष्कृताविशेषेण हर्म्यप्रासादभूमिषु ।
आरूपैर्भोगपदस्थैस्तु साम्प्रतंसिद्धिलालसैः ॥ ३१० ॥
निष्प्रभावात्रमृच्छैली काष्ठदारुमयीगृहे ।
कृतैसोन्यासिकैश्शान्तै श्शश्वन्मोक्षपरायणैः ॥ १ ॥
तदुत्थाश्चबहिस्सर्वैः कार्यास्तासुसदैवहि ।
जनयन्तिमहद्दीप्तिं चन्द्रसूर्योदयेनिशम् ॥ २ ॥
प्राचेकमूर्तेस्त्वर्चानां मूर्तीनान्तुमहामते ।
तथामूर्त्यन्तराणांच प्रादुर्भावगणस्यच ॥ ३ ॥
प्रादुर्भावान्तराणान्तु स्थितानांयत्रकुत्रचित् ।
सर्वेषांसर्वदातेषां हितआराधनायच ॥ ४ ॥
प्रणव.पीठपूजार्थं नमस्कारपदान्वितः ।
प्रसिद्धंचानुसंधेयं संज्ञामन्त्रचतुष्टयम् ॥ ५ ॥
अर्चनेनाजितंतन्तु विनामन्त्रेणयोन्यथा ।
करोतिपूजनंमूढ ब्रह्मबिम्बगणस्यच ॥ ६ ॥
गृहेयाज्ञातमन्त्रस्य दोषस्तस्यप्रजायते ।
विनासामान्यमन्त्रैर्वै ब्रह्मबिम्बगणस्यच ॥ ७ ॥
कुर्याद्विशेषमन्त्रेण विशेषाख्यस्यचार्चनम् ।
तदुत्थमर्चिरेणैव शबलन्तस्य दोषकृत् ॥ ८ ॥
ज्ञात्वैवंसाधधानेन क्रियासक्तेनसर्वदा ।
भवितव्य विशेषाद्वै गृहाश्रमपरेणतु ॥ ९ ॥
क्ष्माभंगाद्येषु दोषेषु ध्वजान्तेष्वेवमेवहि ।
उपोद्घाते प्रवोक्तव्यं प्रणवाद्यपंचकम् ॥ ३२० ॥
होमार्चनविधानेषु सृष्टिसंहारकर्मणि ।
ध्वजाद्यसुद्धरेत्सर्वं मवनीयत्नेनसति ॥ १ ॥
आधारोपळपर्यंत तन्निवेश्यं तथापुनः ।
चक्रप्रासादभंगेषु सोर्ध्वेबिम्बम्महामते ॥ २ ॥

पीठभंगेतुवैविम्बं विम्बभंगेतदेवहि ।
यद्यदिच्छतिचेद्दर्तुं तत्तदादौतुसंयजेत् ॥ ३ ॥
मध्वाज्यगुग्गुलुक्षीर दधिद्राक्षादिभिः क्रमात् ।
सन्तर्प्य तिलहोमैस्तु सहस्रशतसंख्यया ॥ ४ ॥
मन्त्रौघं हृदयात्तस्मिन् समुच्चार्यविनिक्षिपेत् ।
ज्वालवद्भासुराकारं तत्रचिच्छक्तयोखिलाः ॥ ५ ॥
विशान्तिपूर्वसंरुद्धा मन्त्रौघं पुनराहरेत् ।
पाठयेद्दृङ्मयान्सर्वा श्रुतिविद्दयतद्विदः ॥ ६ ॥
कर्मारम्भेतदन्तेवै परमां प्रकृतिनिर्वाति ।
चतुर्भिरनिरुद्धाद्यैः स्तैः स्तैः मंत्रैः पृथक्पृथक् ॥ ७ ॥
कृत्वाहोमंचतादग्नु तत्संज्ञाणैर्विलोमतः ।
प्रणवाद्यन्तगैस्तद्वैः प्राग्वदष्टासुदिक्षुच ॥ ८ ॥
प्रासादस्यतुहोतव्यं गायत्रीभिस्तथैवच ।
वासुदेवाद्यभिज्ञाभि र्होमांतेस्वशतैस्सह ॥ ९ ॥
न्यासंचाह्नमन्त्रेण स्वांगकृत्वात्मगात्तदा ।
वाहमानां तथाधेय प्रलेपं संस्मृत्वेदथ ॥ २३० ॥
संचाल्यहृदयेनैवं शपवक्त्रमथोद्धरेत् ।
विघ्ननिवारणैकृत्या ह्यागर्भेभाविनिक्षिपेत् ॥ १ ॥
जपेत्संहारमनु [नारसिंहं] स्पष्टा त्त्रायश्चित्तार्थमेवच ।
सहस्रमेकमर्धन्त होतव्यं सर्वशांतये ॥ २ ॥
पूर्ववत्तोषयेत्सर्वान् कांचनाद्यैः स्वशक्तितः ।
तर्पयेदन्नपानाद्यै स्सर्वानाचार्य पूर्वकान् ॥ ३ ॥
वाचयन्तद्वादशार्णेन ह्यच्छिद्रंहृष्टमानसैः ।
भूयस्संस्थापनंकुर्या दुद्धृतस्यकृतस्यच ॥ ४ ॥
सामान्यलक्षणैर्मंत्री श्चतुर्मूर्तिमयैस्सह ।
गुह्यस्सप्रणवेनैव यस्सम्यग्भगवन्मयः ॥ ५ ॥

यतस्सप्रणवादस्य श्रातुराम्यंचविद्यते ।
मन्त्रोवाद्येवतारूप स्तस्यतोग्रद्यवेदिनाम् ॥ ६ ॥
प्रपंचःप्रणवोमन्त्रो देवस्य चतुरात्मनः ।
एवंज्ञात्वापुराकर्म स्थापनोत्थापनोतिमम् ॥ ७ ॥
विधिवद्यागपूर्वन्तु बिम्बंसंचालनंविना ।
योदिव्यापतनादीनां भक्तयाभूयः करोतिच ॥ ८ ॥
उपजंघामन्दिरंशुभ्रं पीठं भास्वच्चपिण्डिकां ।
स्त्रग्रोदशैलकाष्ठोत्थैः पद्माद्यैरूर्ध्वतोंकितां ॥ ९ ॥
एकानेकदलैश्चैव बद्धैरायसपूर्वकैः ।
सुगन्धां सूर्यसोमाग्निप्रभाभ्यां सुमनोरमाम् ॥ ३४० ॥
स लोके शाश्वतीं कीर्तिं स्थापयित्वाकुले स्वह ।
स्थानं सायुज्यतापूर्वं देहान्ते नून माप्नुयात् ॥ १ ॥
नानारत्नप्रभाढ्यानि लांछनान्यंगदानि च ।
निर्मितानि सुवर्णाद्यै विभो स्संयोजयन्ति ये ॥ २ ॥
ते धौतकल्मषा स्सर्वे देह मासाद्य पावनम् ।
सम्यज्ज्ञानेन युज्यन्ते भवन्नाप्नान्ति येन च ॥ ३ ॥
आत्मन श्चोपकाराय सर्वदुःखनिवृत्तये ।
अंगुष्ठाग्राद्य गुल्फान्त माजान्वंघाद्यधोदिवा ॥ ४ ॥
मणिमुक्ताप्रवालाढ्य कवचं कांचनादिकम् ।
यः क्षिपत्यतिभक्त्या वै स्वशक्त्यार्च्यांगते च्युते ॥ ५ ॥
स याति परमं स्थानं सपुत्रपशुबान्धवः ।
लग्नं यद्भगवन्मूर्ता वंगदं नूपुरादिकम् ॥ ६ ॥
वियोजयति यो मोहाद तस्य वीचौ स्थिरा स्थितिः ।
य· पंचकालसक्तानां विप्राण मधिकारिणाम् ॥ ७ ॥

पञ्चरात्रविदां चैव द्विजानां सिद्धिकाङ्क्षिणाम् ।
अथ योऽच्छिन्नशाखानां नारायणरतात्मनाम् ॥ ८ ॥
तपस्विनां वा व्रतिनां स्नातकब्रह्मचारिणाम् ।
भक्तानामथवान्येषां मार्जनादौ रतात्मनाम् ॥ ९ ॥
प्रीतये परमेशाय कृत्वा सम्य क्प्रयच्छति ।
शालाद्यायतनोपेत मश्मपक्वेष्टकान्वितम् ॥ ३५० ॥
ग्राम्यै र्धान्यै स्तथारण्यै पूर्ण सम्मति संयुतम् ।
वणिक्कुटुम्बभृतक रक्षापालै स्समन्वितम् ॥ १ ॥
सोऽनन्त फल माप्नोति काल माचन्द्रतारकम् ।
सत्स्थितिं शाश्वतीं लोके माप्नुया दक्षय यशः ॥ २ ॥
भोगोपभोगनिर्नी भद्रां रम्यां पूर्वोक्तलक्षणाम् ।
यागनिष्पत्तये कुर्या द्योऽग्रत- पीठसन्निधे- ॥ ३ ॥
बहि राराधनार्थं वा कर्मिणा ब्रह्मचारिणाम् ।
म नुष्यपितृदेवाख्या न्मुच्यते स ऋणत्रयात् ॥ ४ ॥
मध्यतो गरुडाक्रान्त सचक्राम्बुरुहान्वितम् ।
तुर्याश्रमथवा वृत्त कुण्डवत्पद्वीयुतम् ॥ ५ ॥
बलिपीठ बहिः कुर्या द्भक्त्या यस्त्वच्युतालये ।
स याति शाश्वत स्थान विमाने रिन्दुवर्चसे ॥ ६ ॥
य स्सप्रकार माराम सम्प्रयच्छयति वै विभो ।
नान पुष्पफलोपेत वापीद्रुम [ कूप ] समाकुलम् ॥ ७ ॥
साञ्जतो याशयोपेत मारखडूगसमन्वितम् ।
स नन्दनवने भोगान् भुक्त्वा यात्यच्युतालयम् ॥ ८ ॥
क्षोणीं य स्सस्यसम्पूर्णां युक्तां वा गन्धशालिना ।
केदार जलपातैस्तु परिच्छिन्न समन्ततः ॥ ९ ॥
स यच्छति जगद्धाने काल मासाद्य शाश्वतम् ।
स यायात् सुखिद्वीप तत्रास्ते भगवा निव ॥ ३६० ॥

स्नानोपभोगमन्नार्थं सनृपेन्द्रन्तु गागणम् ।
समर्चयिया देवेशं वैष्णवं प्रतिपादयेत् ॥ १ ॥
सोऽचिरा न्मुक्तदोषस्तु विष्णुलोकं मयाति च ।
गजं रथं वराश्वं च दीपस्थालीं सुलक्षणाम् ॥ २ ॥
व्यजनं चामरं छत्रं वादित्रं गणिकागणम् ।
शुभवस्त्राणिनेत्राणि दिव्यान्याभरणानिच ॥ ३ ॥
वितानंध्वजपङ्क्तींच चित्रपत्रलतागणम् ।
सुस्वरांसुपघण्टाश्च धूपस्थालींसुलक्षणाम् ॥ ४ ॥
भृंगारंदर्पणंतोयकुम्भंगन्धोपलंमहत् ।
पूर्वोद्दिष्टानिचान्यानि धान्यानिविविधानिच ॥ ५ ॥
योददातिहरेर्भक्त्या सतल्लोकमवाप्नुयात ।
ईक्षमाणविभोर्वस्त्रं यद्रत्नंदीपभाजनम् ॥ ६ ॥
महान्तमथवादीपं यन्त्रंकूर्मादिरूपधृत् ।
शरयन्नासनरथच चित्रसम्पुटभूषितम् ॥ ७ ॥
सच्छास्त्रपीठंविविधं श्रद्धयायोमहामते ।
ददातिदेवदेवस्य सतत्स्थानंप्रयातिच ॥ ८ ॥
पुरस्कृत्यजगद्योनिं पश्यतभगवामदीयते ।
तदाराधनसक्तानां सतद्क्षय्यमाप्नुयात ॥ ९ ॥
इतिसम्बोधिताविप्रा लोकधर्मव्यवस्थिताः ।
लांगलीदेवदेवेन सर्वानुग्रहकाम्यया ॥ ३७० ॥
मयामार्गजगद्धातुः प्रसादान्मोक्षसिद्धये ।
यथावदद्यसर्वेषा मग्रतःप्रकटीकृतम् ॥ १ ॥
परम्पापहरम्पुण्यं पावनंवृद्धिभूतिदम् ।
इदंभव्याशयानांच वक्तव्यंभावितात्मनाम् ॥ २ ॥
भक्तानाममत्तानां पुण्डरीकाक्षसेविनाम् ।
गोपनीयमभक्तानां पापछलादिरतात्मनाम् ॥ ३ ॥

अन्यायेनोपसन्नानां नास्तिकानांविशेषतः ।
योगोपायस्ययोग्यानां योग्यानांसम्प्रयच्छति ॥ ९ ॥
इमनर्थसमान्योमे स्वस्तिवोस्तुव्रजाम्यहम् ॥ ३७५ ॥

इति श्रीपाञ्चरात्रे श्रीसात्वतसंहितायाम्

प्रतिष्ठादिविधि र्नाम

पंचविंशः परिच्छेदः ॥ २५ ॥

---

समाप्ता च सात्वतसंहिता ।

---

